शिवागमसिद्धान्तपरिपालनसङ्घप्रकाशितग्रन्थसंख्या १५.

॥ श्रीः ॥

शिवाभ्यां नमः

क्रियाकाण्डक्रमावळ्याख्या

# सोमशम्भुपद्धतिः ।

सोमशम्भुशिवाऽऽचार्यविरचिता

नित्यनैमित्तिककाम्याख्यविधित्रययुता.

इयं

शिवागमसिद्धान्तपरिपालनसङ्घविदुषा

व्याकरणशिरोमणि, K. M. सुब्रह्मण्यशास्त्रिणा

यथामति संशोधिता

देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घाध्यक्षैः

अनन्तशयनस्थ"भास्कर"मुद्रणालये सम्मुद्रिता

देवकोट्टैनगर्यां प्रकाशिता च.

प्रजोत्पत्तिसंवत्सरस्य वैशाखमासि.

कल्यब्दाः ५०३२.

मूल्यं] 1931. [रू. २-८-०.

சிவாகமசித்தாந்த பரிபாலனசங்க வெளியீடு எண் 15.

உ

சிவமயம்.

கிரியாகாண்டக்ரமாவளீ என்னும்

# சோமசம்புபத்ததி.

சோமசம்பு சிவாசாரியர் இயற்றியது.

நித்தியம், நைமித்திகம், காம்யம் என்னும் மூன்று

விதிகளுடன் கூடியது.

இது,

சிவாகமசித்தாந்தபரிபாலனசங்கவித்வான்

வியாகரணசிரோமணி

K. M. சுப்பிரமண்யசாஸ்திரிகளால்

கூடியவாறு பரிசோதிக்கப்பெற்று

தேவகோட்டை

சிவாகமசித்தாந்தபரிபாலனசங்கத்தாரால்

திருவனந்தபுரம் "பாஸ்கர" பிரஸில் அச்சிட்டு

தேவகோட்டையில் வெளியிடப்பெற்றது.

பிரஜோத்பத்தி வருஷம் வைகாசிமாதம்.

விலை.] 1931. [ரூ 2-8-0

॥ श्रीः ॥

शिवाभ्यां नमः

# विज्ञापना ।

क्रोडीकृतनानादिव्यागमार्थसन्दोहेयं पद्धतिः सोमशम्भुशिवाचार्यप्रणीतत्त्वात्सोमशम्भुपद्धतिरित्याख्याता । परं तु ग्रन्थकर्त्रा क्रियाकाण्डक्रमावळीत्यनेनैव नाम्ना पद्धतिरेषा व्यवहृतेति "क्रियाकाण्डक्रमावळ्यां कृतो नित्यविधिक्रमः" इत्याद्येतद्ग्रन्थरत्नप्रतिपाद्यमानपद्यजालवाचकमहाशयैस्सुविशदं प्रतीयेत । एषा च नित्यनैमित्तिककाम्याख्यविधित्रयसम्मिलिता । तेषु प्रतिपाद्यमाना विषया विषयानुक्रमणिकातोऽवगन्तव्याः ।

अस्य ग्रन्थरत्नस्य कवयिता तत्रभवान् सोमशम्भुशिवाचार्यवर्यः प्रसिद्धेषु पद्धतिप्रणेतृष्वष्टादशसु शिवाचार्येष्वेकतम ः इत्येतत् ।

उग्रोत्तरज्योतिरथोस सद्य-
श्श्रीरामकण्ठोऽपि च वैद्यकण्ठः ।
नारायणश्चापि विभूतिकण्ठः
श्रीनीलकण्ठावपि सोमशम्भुः ॥

ईशानशम्भुर्हृदयादिना स्यात्
विरिञ्चिवैराग्यकयुग्मवाच्यौ ।
ज्ञानस्त्रिणेत्रो वरुणेश्वरौ ता
वित्यादयस्ते स्युरघोरशम्भुः ॥

इति शैवभूषणग्रन्थप्रतिपाद्यमानपद्याभ्या ज्ञायते । एतद्ग्रन्थोपरमप्रतिपाद्यमानेन

श्रीशाननामा शिवतुल्यधामा
तस्याथ शिष्यो विमलेशनामा ।
तस्याऽपि शिष्योऽस्त्राशिवश्शिवात्मा
शिष्योऽभवद्यस्य स सोमशम्भुः ॥

इत्यनेन श्लोकेनास्य गुरुपरम्परा ज्ञायते । एतत्पद्यानन्तरस्थितेन "यो गोळकस्थानकृताधिपत्यः" इत्यादिकपद्येनायं महात्मा गोळकमठाधिपतिरिति च प्रतीयते । एतत्पद्यानन्तरस्थितेन

"श्रीविक्रमाख्यनृपकालसमुद्भवेषु
पञ्चाशता त्रिसहितेषु शरच्छतेषु ।
एकादशस्वमलशास्त्रमिदं समाप्तम्"

इति पद्येन त्रिपञ्चाशदधिकशतसहितसहस्रपरिमिते विक्रमाब्दे पद्धतिमेनामचीकरदित्यवगम्यते । ११५३

अस्य ग्रन्थस्य कर्त्रयितुः सोमशम्भुशिवाचार्यात्क्रि-याक्रमद्योतिकापद्धतिनिर्माताऽघोरशिवाचार्योऽर्वाचीनः। यत एनं सोऽसकृत्स्वकृतौ क्रियाक्रमद्योतिकायां पदच्छायया-वाक्यछायया पद्यानुकरणेन च संस्मृतवान् । क्रियाक्रम-द्योतिकायां निर्वाणदीक्षाविध्युपरमे स्वेनैव

"दीक्षाक्रमोऽयं गुरुभिर्यथोक्त-
श्श्रीभोजदेवेन्दुशिवादिभिश्च ।
मन्त्रक्रियाभावविबोधहेतो
स्तथा मयैवं रचितस्सुबोधः" ॥

इत्युक्तम् । अत्रत्येन्दुशिवशब्दस्सोमशम्भुपर इति निर्मलमणिदेशिकोऽभिप्रैति । किं बहुना इमां सोमशम्भु-पद्धतिं क्रियाक्रमद्योतिकापद्धतिकरणमिषेणाऽघोरशिवा-चार्यो व्याख्यदित्येवैतद्ग्रन्थद्वयविमर्शकैः प्रतीयेत । दीक्षा-यां कलाशोधनप्रकरणे मन्त्रभुवनादिष्विव कतिषु चित्स्थ-लेष्वनयोर्ग्रन्थकर्त्रोरभिप्रायभेदोऽवगम्यते ।

इमां सोमशम्भुपद्धतिं त्रिलोचनशिवाचार्यस्स्पष्ट-बोधिन्या टीकया व्याख्यत् । सा टीकाऽस्माभिरुपलब्धापि-लेखकानां प्रमादेनात्यशुद्धाक्रान्ततया विदुषां न प्रमोदाव-हेति नात्र संयोजिता । तथाप्येतत्सोमशम्भुपद्धत्यारू-ढानां गूढार्थकानां केषाञ्चित्पदानामर्थप्रचिकाशयिषया

एतच्छिवागमसिद्धान्तपरिपालनसङ्घविदुषा व्याकरणशिरोमणि K. M. **सुब्रह्मण्यशास्त्रिणा** सङ्गृहीतया ग्रन्थान्तरविषयाऽवबोधिन्या टीकया सहितेयं पद्धतिर्मुद्रापिता ।

एतद्ग्रन्थोपरमस्थितेन "गूढस्य देशिकमतस्य सहस्रयुग्मं" इति वाक्येन ग्रन्थकर्त्रा सोमशम्भुशिवाचार्येणैषा पद्धतिर्द्विसहस्रश्लोकैः प्रणीतेति प्रतीयते । परं त्वस्मिन्नादर्शे पञ्चाशदधिकाष्टशतसहितसहस्रश्लोका एवोपलभ्यन्ते । अवशिष्टाश्श्लोका विशिथिलीभूता इति ग्रन्थान्तरपरिशीलनेनावगम्यन्ते । एतच्च एतत्सोमशम्भुपद्धतिटीकायां किञ्चिदिवोपलब्धं प्रपञ्चितम् ।

एतत्पुस्तकमुद्रणानन्तरं अम्माळग्रहारस्थशिवाऽऽगमपाठशालाध्यापकाश्शिवश्री ति. रा. पञ्चापगेशशिवाचार्याः परिशोध्योपचक्रुः । सूर्यनार् कोयिलाधीनश्रीलश्री **मुत्तुक्कुमारतम्पिरान् स्वामिनः** एतत्सोमशम्भुपद्धतिमुद्रणार्थमादर्शं दत्वोपचक्रुः । एतेषामुपकृतिं भृशमाद्रियामहे ।

एवं

शिवागमसिद्धान्तपरिपालनसङ्घाध्यक्षाः.

॥ श्रीः ॥

# क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतेः

# विषयानुक्रमणिका ।

## तत्राऽऽद्ये नित्यविधौ ।

| विषयाः. | पुटसंख्या. |
|---|---|



द्वितीये नैमित्तिकविधौ

पवित्रारोपणविधिः।



| विषयाः. | पुटसंख्या. |
|---|---|

विषयाः. पुटसंख्या.



विषयाः. पुटसंख्या.

सोमशम्भुपद्धतेर्विषयानुक्रमणिका

समाप्ता ।

---

C

॥ श्रीः ॥

शिवाभ्यां नमः ।

क्रियाकाण्डक्रमावल्याख्या

# सोमशम्भुपद्धतिः ।

(सोमशंभुशिवाचार्यप्रणीता)

नित्यविधौ

## प्रातर्ध्यानादिक्रमः ।

——:o:——

विश्व[1]बोधविधातारं विश्व[2]विज्ञानविग्रहम् ।
विश्व[3]रूपं प[4]रं नत्वा विश्वेशं शिवमव्य[5]यम् ॥ १ ॥

---

१. विश्वबोध शब्देन कर्मपाकनिबन्धनद्विविधचिद्बोधः स्वव्यापारे समर्थताऽऽपादनरूपोऽचिद्बोधश्च बोद्धव्यः । २. विश्वविज्ञान शब्देन चिद्रूपाश्शक्तयः कामिकाद्यागमाश्च ग्राह्याः । ३. विश्वरूपमिति । शिवादिपृथ्व्यन्तसर्वतत्वानित्याधिष्ठेयत्वात् रूपमिव रूपं यस्य सः तमिति भावः । ४. परमिति । नान्येन व्याप्यते शिव इत्यमुमर्थमवबोधयितुं परमिति विशेषणम् । ५. अव्ययमिति अलुप्तशक्तिकामिति भावः ।

संवीक्ष्य शिवशास्त्राणि सदाचार्योपदेशतः[1] ।
क्रमान्नित्यादिकं[2] वक्ष्ये क्रमबोधविवृद्धये ॥ २ ॥

प्रातरुत्थाय सञ्चिन्त्य शिवाय[3] शिवमक्षरम्[4] ।

शौचविधिः ।

उत्सृजेन्मलमूत्रादि[5] गत्वा देशं यथोचितम् ॥ ३ ॥

उत्तराभिमुखो मौनी दिवासन्ध्यासु सर्वदा ।
दक्षिणाभिमुखो रात्रौ नासाग्रव्यग्रलोचनः ॥ ४ ॥

च्छन्नमूर्धैकचित्तस्तु तृणच्छन्नमहीतलः ।
दक्षकर्णोपवीती च द्विजादीनामसम्मुखः ॥ ५ ॥

ततस्तृणैरयज्ञाङ्गैर्मृज्याल्लोष्टेन वा गुदम् ।
न तु गोमयपाषाणैर्दारुभिश्च कदाचन ॥ ६ ॥

---

१. सदाचार्योपदेशत इति । परमशिवात्प्रभृति नीरन्ध्र-सम्प्रदायप्रज्ञानवदाचार्योपदेशादिति भावः । २. नित्यादिकम् इति । नित्यकाण्डं नैमित्तिककाण्डं काम्यकाण्डं चेत्यर्थः । ३. शिवायेति मङ्गळायेति भावः । ४. शिवमक्षरमित्यनेन स्वाभाविकौपाधिकक्षया-दिदोषरहितं निष्कळं शिवमित्यर्थो वा भोगावस्थं सकलनिष्कळं शिवमि-त्यर्थो वा अक्षविशिष्टं पञ्चवक्त्राद्याकारं राति आदत्त इति व्युत्पत्तेः अधि-कारावस्थं सदाशिवमित्यर्थो वा तत्तदधिकारिभेदेन ग्राह्यः । अथवा लय-भोगाधिकारावस्थशिववाचकः मन्त्रेश्वरः प्रासाद एव शिवमक्षरमिति शब्देन गृह्यते । ५. मलमूत्रादीति । आदिशब्देन कर्णादिभ्यो जाता दशविधा मला ग्राह्याः ।

विशुद्धां मृदमादाय तां निधाय जलान्तिके ।
तया सान्तरया पश्चात्पयोभिश्शौचमाचरेत् ॥ ७॥

एका लिङ्गे गुदे पञ्च दश वामकरे मृदः ।
उभयोस्सप्त संयोज्याः परिमृज्यात्ततस्स्फचौ ॥ ८॥

अथवा भाव[1]संशुद्धिपर्यन्तं शौचमाचरेत् ।
भावो हि भवितुश्चित्तिश्शुद्धये मुनिभिर्मतः ॥ ९॥

एकैकया मृदा क्षाळ्य पादौ हस्तौ च वारिणा ।

दन्तधावनविधिः ।

आचम्य विधिवच्छुद्धो दन्तधावनमाचरेत् ॥ १०॥

सार्द्रं सत्वक् समच्छेदं ऋजुं शुद्धमपर्वकम् ।
कनिष्ठाङ्गुलिविस्तारं प्रशस्तं दन्तधावने ॥ ११॥

चिरिबिल्वं करञ्जोत्थं शैरीषं खादिरार्जुनौ ।
अष्टाङ्गुलं मुमुक्षूणां बुभुक्षूणामथोच्यते ॥ १२॥

प्लक्षाम्रककुभाशोकजम्बूचम्पकसम्भवम् ।
अपामार्गातिमुक्तोत्थं द्वादशाङ्गुलमायतम् ॥ १३॥

अथवा विप्रराजन्यवैश्यशूद्रान्त्यजातिषु ।
द्वादशाङ्गुलमुद्दिष्टं क्रमादेकैकहा[2]नितः ॥ १४॥

---

१. भावसंशुद्धीति अधिकसंख्यायां तात्पर्यं न तु ह्रासे तथा-सतिसंख्याविधानानर्थक्यापत्तेः । २. ह्रासत इति पाठः ।

पीलुधात्री[1]कुहेरण्डक्षीरिनिम्बाङ्गुलीतृणैः ।
शिग्रुवानीरपैशाचकाशाङ्गुलिकुशैर्नहि ॥ १५ ॥

नवमीदर्शषष्ठीषु प्रतिपत्सु विना चरेत् ।
कुर्याद्वा पावनैः पत्रैः बुभुक्षुर्दन्तधावनम् ॥ १६ ॥

अथवा मुखसंशुद्धिं दन्तानां धावनं विना ।
गण्डूषैस्सूर्यसंख्यातैर्विधाय स्नानमाचरेत् ॥ १७ ॥

वारुणमलस्नानविधिः ।

सिन्धुसङ्गम[2]कासार[3]तटाके[4]षु नदे[5] ह्रदे[6] ।
पल्वले[7] प्लवने[8] चैव स्नानमत्यन्तमुत्तमम् ॥ १८ ॥

नाळे[9] च पुष्करिण्यादौ[10] मध्यमं कन्यसं पुनः ।
कूपभाण्डोदपानेषु गृहे स्नानमनुत्तमम् ॥ १९ ॥

---

१. घात्रीथ इति पाठः । २. सिन्धुसङ्गम इति नद्योस्सङ्गमः नदीसमुद्रयोस्सङ्गमश्चेत्यर्थः । ३. कासारः इति महासरः । ४. तटाक इति पद्माकरत्वयोगेन जलाशय उच्यते । ५. नद इति अनेन पश्चिमदिगभिमुखप्रवाहो नदीविशेष उच्यते । ६. ह्रद इति अशुष्यज्जलो नदीमध्यगतस्तोयाशयः । ७. पल्वले इति निम्नप्रदेशवर्तुलसरसीत्यर्थः । ८. प्लवने इति । व्याख्याने तु प्लवने इत्यस्य प्रतिनिधित्वेन पुवने इति पदमादाय निर्झर इति व्याख्यातम् । ९. नाळ इति कज्जलनिर्गमपद्धतिरित्यर्थः । १०. पुष्करिणीचतुष्कोणस्तटाकः ।

खात्वाऽसिना समुद्धृत्य मृदमष्टाङ्गुलादधः ।
सर्वात्मना समादाय पुनस्तेनैव पूरयेत् ॥ २० ॥

शिरसा पयसस्तीरे निधायास्त्रेण शोधयेत् ।
तृणादीन् शिखयोद्धृत्य वर्मणा विभजेत्त्रिधा ॥ २१ ॥

एकयाऽऽनाभिपादान्तं प्रक्षाळ्य पुनरन्यया ।
अस्त्राभिलब्धयाऽऽलिप्य दीप्तया सर्वविग्रहम् ॥ २२ ॥

निरुध्याक्षाणि पाणिभ्यां प्राणान् संयम्य वारिणि ।
निमज्याऽऽसीत हृद्यस्त्रं स्मरन् कालानलप्रभम् ॥ २३ ॥
मलस्नानं विधायेत्थं समुत्थाय जलान्तरात् ।

अस्त्रसन्ध्या ।

अस्त्रसन्ध्यामुपास्याथ[1] विधिस्नानं समाचरेत् ॥ २४ ॥

वारुणविधिस्नानविधिः ।

सारस्वतादितीर्थानामेकमङ्कुशमुद्रया[2] ।
हृदाकृष्य तथाऽऽस्थाप्य पुनस्संहारमुद्रया ॥ २५ ॥

शेषं मृद्भागमादाय प्रविश्याऽऽनाभिवारिणि ।
वामपाणितले कुर्याद्भागत्रयमुदङ्मुखः ॥ २६ ॥

---

१. अस्त्रसन्ध्यामिति "अस्त्रमुद्दिश्य या सन्ध्या सास्त्रसन्ध्ये"ति तल्लक्षणम् । २. सारस्वतेति सरस्वतीगङ्गायमुनादीनां इत्यर्थः ।

अङ्गैर्दक्षिणमेकार्धं पूर्वमस्त्रेण सप्तधा ।
शिवेन दशधा सौम्यं जपेद्भागत्रयं क्रमात् ॥ २७ ॥

सर्वदिक्षु क्षिपेत्पूर्वं हुंफडन्तशराणुना ।
कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजभ्रमात् ॥ २८ ॥

सर्वाङ्गमङ्गजप्तेन मूर्धादिचरणावधि ।
दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम् ॥ २९ ॥

पिधाय खानि सर्वाणि षण्मुखीकरणेन च ।
निमज्यान्तर्जले तिष्ठेच्छिवतीर्थं शिवं स्मरेत् ॥ ३० ॥

चन्द्रार्क[1]करयुग्मेन कृतया कुम्भमुद्रया ।
वौषडन्तषडङ्गेन के कुर्यादभिषेचनम् ॥ ३१ ॥

स्वरक्षार्थमविच्छिन्नं विघ्नविध्वंसनाय च ।
अस्त्राभिमन्त्रितं तोयं दिग्विदिक्षु विनिक्षिपेत् ॥ ३२ ॥

चक्रवर्त्युपचारेण सुगन्धामलकादिभिः ।
स्नात्वोत्तीर्य च तत्तीर्थं संहारिण्योपसंहरेत् ॥ ३३ ॥

कपोतकुक्कुटाद्यैश्च काककङ्कखरश्वभिः ।
ग्रामसूकरगृध्रोष्ट्रैस्तदु[2]द्भूताङ्गवैकृतैः ॥ ३४ ॥

---

१. चन्द्रार्केति चन्द्रसूर्यरूपेण विभावितेन करद्वन्द्वेनेति भावः ।
२. तदुद्भूताङ्गवैकृतैरिति । प्रागुक्तकपोतादिसम्भूताङ्गविकारैः पक्षतुण्डरोमखुरास्थिभिः इत्यर्थः ।

श्मशानपतितप्रेतसूतिकामाल्यभोजकैः¹ ।
तथाऽन्यलिङ्गिभिस्स्पर्शे वारुणं स्नानमाचरेत् ॥ ३५ ॥

शुक्लविण्मूत्रसम्पर्के नाभेरूर्ध्वं करौ विना ।
वपने वमने तोयमवगाहेत शुद्धये ॥ ३६ ॥

आग्नेयभस्मस्नानविधिः ।

अथातो² विधिसिद्धेन³ संहितामन्त्रितेन च ।
निर्वृत्त्यादि⁴विशुद्धेन भस्मना स्नानमाचरेत् ॥ ३७ ॥

शिरस्तः पादपर्यन्तं हुंफडन्तशराणुना ।
तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् ॥ ३८ ॥

ईशतत्पुरुषाघोरगुह्यकाजातशम्बरैः ।
क्रमेणोद्धूळयेन्मूर्धवक्त्रहृद्गुह्यविग्रहान् ॥ ३९ ॥

सन्ध्यात्रये निशीथे च चर्या⁵पूर्वावसानयोः ।
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वाचावश्यकादिकम् ॥

---

१. भोजकः क्षत्रगोळकः । २. अथात इति । अस्माद्वारुणस्नानादनन्तरं भस्मस्नानमाचरेदिति सम्बन्धः । अन्यथाऽकृतवारुणस्नानस्याऽपि भस्मस्नानेऽधिकारप्रवृत्तेः । तदुक्तं मतङ्गे "एवं सकृद्यथाशक्ति स्नान्तोंऽभसि दिने दिने । भस्मस्नानेऽधिकारी स्यात् नान्यथामुनिपुङ्गव" इति । ३. विधिसिद्धेनेति । कल्पादित्रयाणां अवान्तरभेदानादरेण विधिसिद्धेनेत्येकरूपेणोक्तिः । ४. निवृत्त्यादीति । अनेन चतुर्थस्याकल्पाख्यस्य सङ्ग्रहः । ५. चर्या भिक्षाचरणमित्यर्थः ।

स्त्रियं नपुंसकं शूद्रं बिडालबकमूषिकान् ।
स्पृष्ट्वा तथा विधानेन चाग्नेयस्नानमाचरेत् ॥ ४१ ॥
देवाग्निगुरुविद्यानां समीपेऽन्त्यजदर्शने ।
अशुद्धभूतले मार्गे कुर्यान्नोद्धूळनं व्रती ॥ ४२ ॥

माहेन्द्रस्नानविधिः ।

सूर्यांशुवर्षसम्पर्के प्राङ्मुखेनोर्ध्वबाहुना ।
माहेन्द्रस्नानमीशेन कार्यं सप्तपदावधि ॥ ४३ ॥

वायव्यस्नानविधिः ।

गोसङ्घमध्यगः कुर्यात्तत्खुरोत्खातरेणुभिः ।
पावनं नरमन्त्रेण स्नानं तद्वर्मणाऽथवा ॥ ४४ ॥

मन्त्रस्नानविधिः ।

सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ।
मन्त्रस्नानं भवेदेवं वारुणाग्नेययोरपि ॥ ४५ ॥

मानसस्नानविधिः ।

मनसा मूल[1]मन्त्रेण प्राणायामपुरस्सरम् ।
कुर्वीत मानसं स्नानं सर्वत्र विहितं हि तत् ॥ ४६ ॥

---

१. मूलेति । मूलमन्त्रोच्चारणक्षोभितकुण्डलिकाशक्तिप्रसृतामृतधाराभिः मानसं स्नानमाचरेत् ।

आचमनविधिः ।

संप्रक्षाळ्य विशुद्धेन हस्तौ पादौ च वारिणा ।
संवीक्ष्य त्रिः पिबेदंबु ब्रह्मतीर्थेन[1] शंम्बरैः[2] ॥ ४७ ॥
स्वधान्तैरात्मतत्वाद्यै र्द्विः प्रमृज्याऽधरौ हृदा ।
दक्षिणाङ्गुष्ठमूलेन मध्याभिस्त्रिसृभिस्स्पृशेत् ॥ ४८ ॥
अङ्गुष्ठतर्जनीमूर्ध्ना स्पृशेन्नासापुटद्वयम् ।
अङ्गुष्ठानामिकाग्रेण चक्षुश्श्रोत्रं मुहुर्जलैः ॥ ४९ ॥
कनिष्ठाङ्गुष्ठमूलेन नाभिवक्षस्थलेऽपि च ।
अङ्गुलीभिस्समस्ताभिश्शिरोंसौ च हृदा स्पृशेत् ॥ ५० ॥

शैवसन्ध्याविधिः ।

सकळीकरणं कृत्वा प्राणायामेन संस्थितः ।
त्रिस्समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ॥ ५१ ॥
पूर्ववत्पुनराचम्य विधाय श्रोत्रवन्दनम् ।
कृत्वा कराङ्गविन्याससेकचित्तो व्यवस्थितः ॥ ५२ ॥
ब्राह्मीं च वैष्णवीं रौद्रीं रक्तां शुक्लां सितेतराम् ।
प्रातर्मध्याह्नके सायं सन्ध्यां ध्यायेदनुक्रमात् ॥ ५३ ॥

ब्राह्मीसन्ध्याध्यानम् ।

रक्तभूषाम्बरां रक्तां जटायज्ञोपवीतिनीं
हंसपद्मासनां बालां चतुर्वक्त्रां चतुर्भुजाम् ॥ ५४ ॥

---

१. ब्रह्मतीर्थेन अङ्गुष्ठमूलेन । २. शम्बरैः मन्त्रैः ।

2

स्रुगक्षमालिकां दक्षे वामे दण्डकमण्डलुम् ।
ब्राह्मीमष्टदृशीं ध्यायेत्प्रातस्तारकितेम्बरे ॥ ५५ ॥

वैष्णवीसन्ध्याध्यानम् ।

शुक्लाम्बरधरां शुक्लां वनमालोपवीतिनीं ।
तार्क्ष्यपद्मासनासीनामुद्भिन्ननवयौवनाम् ॥ ५६ ॥
शङ्खचक्रधरां वामे दक्षिणे सगदाभयाम् ।
ध्यायेन्माध्यन्दिने देवीं वैष्णवीं सर्वभूषणाम् ॥ ५७ ॥

रौद्रीसन्ध्याध्यानम् ।

नीलोत्पलदळाभासां किञ्चिच्चलितयौवनाम् ।
चतुर्भुजां त्रिणेत्रां च जटाखण्डेन्दुमण्डिताम् ॥ ५८ ॥
त्रिशूलाक्षधरां दक्षे वामे चाभयशक्तिकाम् ।
रौद्रीं ध्यायेद्वृषाब्जस्थां कालेऽर्धास्तमितारुणे ॥ ५९ ॥
कृष्णाजिनधरास्सर्वास्साक्षिण्यस्सर्वकर्मणाम् ।
[1]तत्प्रभामण्डलाभोगप्रविष्टां स्वतनुं स्मरेत् ॥ ६० ॥
[2]ज्ञानिनां परमास्सन्ध्याश्चतस्रो विदधेऽधुना ।
एकैवाऽनेकतां याति शिवशक्तिरुपाधितः ॥ ६१ ॥

---

१. तत्प्रभामण्डलेति । तासां प्रभाणां मण्डलं समूहः तस्याऽऽभोगो विस्तारः तत्प्रविष्टाम् । २. ज्ञानिनामिति निर्वाणदीक्षितानां इत्यर्थः ।

## तुरीयसन्ध्याध्यानम् ।

मृणाळतन्तुवत्तन्वी रक्ताशुक्लासितेतरा ।
तुर्यात्वरूपा कृष्णाभा या निशीथे विभाव्यते ॥ ६२ ॥

हृद्बिन्दु[1]ब्रह्मरन्ध्रेषु परे[2] चैता स्स्थिताः क्रमात् ।
तिस्रस्सत्वादिसंयुक्ताश्चतुर्थी गुणवर्जिता ॥ ६३ ॥

सूर्याचन्द्रमसो[3]रन्ते[4] द्वे सन्ध्ये प्राणयोगिनाम्[5] ।
शिव[6]बोधपरा या तु सा सन्ध्या परमोच्यते ॥ ६४ ॥

## करस्थपित्रादितीर्थप्रदर्शनविधिः ।

पैत्रं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः ।
ब्राह्ममङ्गुष्ठमूलेन तीर्थं दैवं कराग्रतः ॥ ६५ ॥

सव्यपाणितले वह्नेः तीर्थं सोमस्य वामतः ।
ऋषीणां तु समग्रेषु ह्यङ्गुळीपर्वसन्धिषु ॥ ६६ ॥

---

१. हृद्बिन्दु इति बिन्दुः फालदेशः । २. परे इति परस्मिन् द्वादशान्ते इत्यर्थः । ३. सूर्याचन्द्रमसोरिति ऊर्ध्वाधःप्राणयोः इडा पिङ्गळानाड्योरितिवार्थः । ४. अन्ते इति उपरतावित्यर्थः । ५. प्राणयोगिनामिति हंसयोगिनामित्यर्थः । ६. शिवबोधपरेति सर्वोपाधिविधुरद्वादशान्तस्थपरमशिवसंविदनुभवः इत्यर्थः । तत्राऽऽत्मशिवयोस्सन्धिध्यानं तत्सामरस्यम् । द्वेसन्ध्ये इति निर्वाणदीक्षितार्हा तुरीया सन्ध्या, परज्ञानिभिः करणीया द्वादशान्ते आत्मशिवयोस्सामरस्यरूपा सन्ध्या च गृह्यते । एते सूर्याचन्द्रमसोरन्ते ध्यातव्ये इत्यन्वयः ।

मार्जनविधिः ।

ततश्शिवात्मकैर्मन्त्रैः[1] कृत्वा तीर्थं शिवात्मकम् ।
मार्जनं संहितामन्त्रैः तत्तोयेन समाचरेत् ॥ ६७ ॥

वामपाणौ पतत्तोयं योजयन् सव्यपाणिना ।
उत्तमाङ्गे क्रमान्मन्त्रैः मार्जनं समुदाहृतम् ॥ ६८ ॥

अघमर्षः ।

नीत्वा तदुपनासाग्रं दक्षपाणिपुटे स्थितम् ।
बोधरूपं सितं तोयं वामया[2]ऽऽकृष्य कुम्भयेत् ॥ ६९ ॥

तत्पापं कज्जलाभासं पिङ्गया[3]ऽऽरेच्य[4] रिष्टिना[5] ।
क्षिपेद्वज्रशिलायां यत्तद्भवेदघमर्षणम् ॥ ७० ॥

शिवार्घ्यदानविधिः ।

स्वाहान्तमूलमन्त्रेण कुशपुष्पाक्षतान्वितम् ।
शिवायार्घ्याञ्जलिं दत्वा गायत्रीं शक्तितो जपेत् ॥ ७१ ॥

कुशाक्षततिलैर्मिश्रमस्त्रवारिविसर्जनम् ।
तर्पणं करशाखाग्रैः कारयेदुपदेशभाक् ॥ ७२ ॥

---

१. शिवात्मकैरिति शिवतदङ्गवाचकैरित्यर्थः । २. वामया इति इडयेत्यर्थः । ३. पिङ्गया पिङ्गळयेत्यर्थः । ४. आरेच्य रेचयित्वा । ५. रिष्टिना अस्त्रेणेत्यर्थः ।

## शिवाङ्गदेवादितर्पणक्रमः ।

ओं हां हौं शिवाय स्वाहा ।
ओं हां हृदयाय स्वाहा ।
ओं हीं शिरसे स्वाहा ।
ओं हूं शिखायै स्वाहा ।
ओं हैं कवचाय स्वाहा ।
ओं हौं नेत्रेभ्यस्स्वाहा ।
ओं हः अस्त्राय स्वाहा ।
इत्यङ्गुळ्यग्रैर्मन्त्रगणान् देवतीर्थेन तर्पयेत् ॥

ओं हां आदित्येभ्यस्स्वाहा ।
ओं हां वसुभ्यस्स्वाहा ।
ओं हां रुद्रेभ्यस्स्वाहा ।
ओं हां विश्वेभ्यस्स्वाहा ।
ओं हां साध्येभ्यस्स्वाहा ।
ओं हां मरुद्भ्यस्स्वाहा ।
ओं हां भृगुभ्यस्स्वाहा ।
ओं हां अङ्गिरोभ्यस्स्वाहा ॥
इत्यङ्गुळ्यग्रैरष्टौ देवगणान् देवतीर्थेन तर्पयेत् ।
ततः कण्ठोपवीती ओं हां अत्रये नमः ।
ओं हां वसिष्ठाय नमः ।

ओं हां पुलस्त्याय नमः ।
ओं हां क्रतवे नमः ।
ओं हां भारद्वाजाय नमः ।
ओं हां विश्वामित्राय नमः ।
ओं हां प्रचेतसे[1] नमः ।

इत्यङ्गुळिपर्वसन्धिभिरार्षतीर्थेन ऋषीन् तर्पयेत् ।

ओं हां सनकाय वषट् ।
ओं हां सनन्दनाय वषट् ।
ओं हां सनातनाय वषट् ।
ओं हां सनत्कुमाराय वषट् ।
ओं हां कपिलाय वषट् ।
ओं हां पञ्चशिखाय वषट् ।
ओं हां ऋभवे वषट् ।

इति मानव[2]तीर्थेन सप्तमनुष्यान् तर्पयेत् ।

ओं हां सर्वेभ्यो भूतेभ्यो वौषट् इति संलग्नकरतलमूलेन भूतानि तर्पयेत् ।

---

१. ओं हां प्रचेतसे नम इत्यस्यानन्तरं ओं हां ऋच्छकाय नमः, ओं हां अगस्त्याय नमः, ओं हां दधीचये नमः, ओं हां दुर्वाससे नमः इति विद्यते क्रियाक्रमद्योतिकायाम् । २. मानवेति कनिष्ठामूलाभ्याम् इत्यर्थः ।

अथ दक्षस्कन्धोपवीती कुशमूलाग्रेण सतिलवारिणा
ओं ह्रां कव्यवाहनाय स्वधा
ओं ह्रां अनलाय स्वधा
ओं ह्रां सोमाय स्वधा
ओं ह्रां यमाय स्वधा
ओं ह्रां अर्यम्णे स्वधा
ओं ह्रां अग्निष्वात्ताय स्वधा
ओं ह्रां बर्हिषद्भ्यस्स्वधा[1]
ओं ह्रां आज्यपाय स्वधा ।
ओं ह्रां सोमपाय स्वधा । इति देवपितॄन् तर्पयेत् ।
ओं ह्रां सर्वेभ्यः पितृभ्यस्स्वधा
ओं ह्रां सर्वाभ्यो मातृभ्यस्स्वधा ।
ओं ह्रां पितृभ्यस्स्वधा
ओं ह्रां पितामहेभ्यस्स्वधा ।
ओं ह्रां प्रपितामहेभ्यस्स्वधा ।
ओं ह्रां वृद्धप्रपितामहेभ्यस्स्वधा
ओं ह्रां मातृभ्यस्स्वधा ।
ओं ह्रां मातामहेभ्यस्स्वधा ।
ओं ह्रां प्रमातामहेभ्यस्स्वधा ।

---

१. बर्हिषदे इति क्रियाक्रमद्योतिका ।

ओं हां वृद्धप्रमातामहेभ्यस्स्वधा ।
ओं हां सर्वेभ्यो ज्ञातिभ्यस्स्वधा ।
ओं हां सर्वेभ्य आचार्येभ्यस्स्वधा ।
इति ज्ञात्याचार्यपितॄन् प्रदेशिनीमूलेन तर्पयेत् ।
ईशादिपतिसिद्धानां मातॄणां ग्रहरक्षसाम् ।
यथाविधि विधातव्यं तर्पणं विधिपूर्वतः ॥ ७३ ॥

——:o:——

## सूर्यपूजा ।

समाचम्य विधानेन त्र्यञ्जलेनार्घ्यमुद्धरेत् ।
रक्तपुष्पादितोयेन मूलमन्त्रेण भानवे ॥ १ ॥

---

१. ईशादीति आदिशब्देन सदाशिवशान्तौ गृह्येते । ओं हां ईशाय पित्रे स्वधा ओं हां सदाशिवाय पितामहाय स्वधा । ओं हां शान्ताय प्रपितामहाय स्वधेति विशेषपितॄन् तर्पयेदित्यर्थः । एतत्पद्यास्थितपतिशब्देन दिक्दिक्पती गृह्येते । ओं हां दिग्भ्यस्स्वधा ओं हां दिग्पतिभ्यस्स्वधेति दिग्दिग्पतितर्पणक्रमोऽवगन्तव्यः । २. सूर्योपस्थानमात्मेज्यालिङ्गाग्निगुरुपुस्तकम् । इति नित्यं समाख्यातं षडाधारशिवार्चनम् । इति वचनात् सूर्यपूजाया नित्यत्वात् बुभुक्षुश्च मुमुक्षुश्च सकृन्नित्यं प्रपूजयेत् इत्युक्तेः बुभुक्षुमुमुक्षुसाधारणत्वाच्च सकळस्सूर्यरूपस्तु निष्कळशिव एव च । देहस्थं पूर्वमाराध्य पश्चाद्देवं यजेद्बुधः । इत्युक्तिमनुसन्धाय सन्ध्यावन्दनक्रमादनन्तरं सूर्यपूजां ब्रूते समाचम्येति । ३. रक्तपुष्पादीति आदिशब्देन रक्तचन्दनादि गृह्यते । "तत्पात्रे जलमापूर्य रक्तचन्दनतण्डुलैः । रक्तपुष्पकुशैर्वापि" इति चिन्त्यविश्वोक्तेः ।

यदा यदा समाचामेन्मन्त्रन्यासं तदा तदा ।
कुर्वीत[1] करकायेषु मन्त्री मन्त्रार्थसिद्धये[2] ॥ २ ॥
अथ मार्ताण्डदेवस्य साङ्गमर्चनमुच्यते ।
कृत्वा कराङ्गविन्यासं मन्त्रैश्च हृदयादिभिः ॥ ३ ॥
आत्मानं रविरूपेण सञ्चिन्त्यार्घ्यस्य भाजनम् ।
पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना[3] ॥ ४ ॥
तत्सम्पूज्य रवेरङ्गैः[4] कृत्वा रक्षावकुण्ठने[5] ।
सम्प्रोक्ष्य[6] तज्जलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत् ॥ ५ ॥

ओं अं[7] दण्डिने[8] नमः, ओं अं पिङ्गळाय नमः इति दक्षिणवामशाखयोर्द्वारपालद्वयं पूजयेत् ।

---

१. कुर्वीतकरकायेष्विति सूर्यमूलाक्षरैः अर्चकस्सकळीकृत्य स्वात्मानं भास्करं भावयेदिति सिद्धान्तशेखरोक्तिं मनसि निदधानः प्राह कुर्वीत करकायेष्विति । २. मन्त्रार्थेति मन्त्रसाध्यप्रयोजनसिद्धये इत्यर्थः । ३. बिन्दुनेति अमृतबिन्दुनेत्यर्थः । ४. रवेरङ्गैरिति अं हृदयाय नमः, अं अर्काय शिरसे नमः, अं भूर्भुवस्सुवरों ज्वालिनीशिखायै नमः, अं हूं कवचाय नमः, भां भानुनेत्राभ्यां नमः, रः अस्त्राय नमः, इति मन्त्रैरित्यर्थः । ५. रक्षावकुण्ठन इति अस्त्रकवचाभ्यामिति शेषः । ६. सम्प्रोक्ष्येति अस्त्रेणेतिशेषः । ७. अमिति मातृकायां हां बीजाक्षरो वर्तते क्रियाक्रमद्योतिकायां हां बीजाक्षरो न विद्यते । ८. दण्डिने इति दण्डो लगुडः सोऽस्याऽऽयुधत्वेनास्तीति दण्डी तस्मै दण्डिने ।

ओं अं गणपतये नमः ऐशान्याम् ।

ओं अं गुरुभ्यो नमः आग्नेय्याम् ।

ओं अं प्रभूतासनाय नमः । इति श्वेत[1]पीठं मध्ये पूजयेत् ।

आग्नेयादीशपर्यन्तकोणेषु च यथाक्रमम् ।

ओं अं विमलाय नमः ।

ओं अं साराय नमः ।

ओं अं आराध्याय नमः ।

ओं अं परमसुखाय नमः ।

इति सितरक्तपीतहरितासिंहरूपाणि विचिन्त्यार्चयेत् । तदुपरि ओं अं पद्मासनाय नमः इति सितपद्ममध्यमभ्यर्च्य तदनन्तरं ओं रां दीप्तायै नमः ।

ओं रीं सूक्ष्मायै नमः ।

ओं रुं जयायै[2] नमः ।

ओं रूं भद्रायै नमः ।

ओं रें विभूत्यै नमः ।

---

१. श्वेतेति "श्वेतपीठात्मकं मध्ये प्रभूतासनमर्चयेद्"िति रामनाथपद्धतेः प्रभूतासनं श्वेतपीठमयमिति बोद्धव्यम् । २. रुजायै इति क्रियाक्रमद्योतिका ।

ओं रैं विमलायै नमः ।

ओं रों अमोघायै नमः ।

ओं रौं विद्युतायै नमः ।

ओं रः सर्वतो मुख्यै नमः ।

पूर्वादीशान्तपर्यन्तमष्टौ शक्तीः प्रपूजयेत् ॥ ६ ॥

नवमीं[1] कर्णिकामध्ये[2] विस्फुराभासु दर्शयेत् ।
दीप्तदीपनिभाकारा ध्यातव्या नवशक्तयः ॥ ७ ॥

ओं अं अर्कासनाय[3] नमः इत्यर्कासनं संपूज्य,

धवळाम्भोरुहारूढं दाडिमीकुसुमप्रभम् ।
स्फुरद्रक्तमहातेजोवृत्तमण्डलमध्यगम् ॥ ८ ॥

अंसासक्तस्फुट[4]श्वेतसनाळाब्जकरद्वयम् ।
एकास्यं चिन्तयेद्भानुं द्विनेत्रं रक्तवाससम् ॥ ९ ॥

इति ध्यात्वा ततः ओं खं खषोल्काय सूर्यमूर्तये नमः इत्यनेनाऽऽसनस्योपरि मूर्तिं विन्यस्य ओं भां भानुनेत्राभ्यां नम इति नेत्रे दत्वा ललाटाकृष्टस्फुरदरुण-

---

१. नवमीं इति सर्वतोमुखीमितिशेषः । २. कर्णिकामध्ये इति पूजयेदिति शेषः । ३. अर्कासनाय नमः इति मध्ये इति शेषः । ४. स्फुटेति विकचदित्यर्थः ।

बिन्दुमञ्जलौ[1] विचिन्त्य ओं ह्रां ह्रीं सः शिवसूर्याय नमः इति मूलमन्त्रेण तद्व्यापकमारोपयेत्[2] ।

आवाहनादिमुद्राभि र्विधायाऽऽवाहनादिकम्[3] ।
प्रीतये ग्रहराजस्य बिम्बमुद्रां प्रदर्शयेत् ॥ १० ॥

सकळी(करण)[4]कृतिमेकत्वं[5] कृत्वा कुर्यात्खषोल्किना[6] ।
पाद्यमाचमनीयं च शिरोऽर्घ्यं गात्रपूजनम्[7] ॥ ११ ॥

सम्पूज्य गन्धपुष्पाद्यैः मूलमन्त्रेण भास्करम् ।
पद्माख्यां बिम्बमुद्राञ्च भक्त्या तस्मै प्रदर्शयेत् ॥१२॥
सौम्यानि रक्तवर्णानि वरदाब्जकराणि च ।
भूषितानि द्विहस्तानि भानोरङ्गानि भावयेत्[8] ॥ १३ ॥

---

१. अञ्जलौ विचिन्त्येति पुष्पभरिते इति शेषः। २. तद्व्यापकमिति खषोल्कात्मसूर्यमूर्तिव्यापिनमित्यर्थः । ३. आवाहनादिकमिति आदिशब्देन स्थापन्या पद्मासने संस्थापनं सन्निधान्या सान्निधापनं निष्ठुरया सन्निरोधनं च बोध्यते । ४. सकळीकरणमिति हृदयादिकरान्तस्थानेषु हृदयादिमन्त्रविन्यसनमेव सकळीकरणम् । ५. एकत्वमिति मूलमन्त्रेणेति शेषः। हृदयाद्यङ्गानामङ्गिनासार्धमपृथग्भावरूपमेकत्वमित्यर्थः। ६. खषोल्किनेति ओं खं खषोल्काय नम इति पादयोः पाद्यं स्वधान्तेन तेन मुखे आचमनम् । स्वाहान्तेन शिरस्यर्घ्यं च दद्यादित्यर्थः । ७. गात्रपूजनमिति गात्रपूजनशब्देन वौषडन्तमूलेन शिवसूर्याय पुष्पदूर्वाक्षतादिदानं अभ्यङ्गादिना संस्नापनं रक्तवस्त्रपुष्पगन्धादिभिरलङ्करणं मूलेन पुष्पाञ्जलित्रयार्चनमर्घ्यदानं च द्योत्यते । ८. अङ्गानि भावयेदिति विभाव्यार्चयेदिति भावः । देवस्याग्रतो नेत्रं चार्चयेदिति शेषः ।

दंष्ट्राकराळमत्युग्रं प्रज्वलत्पावकप्रभम् ।
तर्जयन् विघ्नसङ्घातमित्थमस्त्रं[1] विचिन्तयेत् ॥ १४ ॥

ओं अं हृदयाय नमः । इत्यग्निदळे
ओं अं अर्काय शिरसे नमः इत्यैशान्यदळे ।

भूर्भुवस्सुवरों ज्वालिनीशिखायै नमः । इति नैऋते
ओं हूं कवचाय नमः इति वायव्यदळे ।

ओं भां भानुनेत्राभ्यां नमः इति मध्ये ।

ओं रं अस्त्राय नमः इति पूर्वाद्युत्तरान्तचतुर्दळेषु च संपूजयेत् ॥

धेनुमुद्रा हृदादीनां गोविषाणां च नेत्रयोः ।
अस्त्रस्य त्रासिनी योज्या ग्रहाणां च नमस्क्रिया ॥१५॥

ओं सं सोमाय नम इति पूर्वदळे ।
ओं अं अङ्गारकाय नम इत्याग्नेयदळे ।
ओं बुं बुधाय नमः इति दक्षिणदळे ।
ओं शं शनैश्चराय नमः इति नैर्ऋतदळे ।
ओं गुं गुरवे नम इति वारुणदळे ।
ओं रं राहवे नम इति वायव्यदळे ।

---

१. अस्त्रं विचिन्तयेदिति पूर्वादिचतुर्दळेषु इति शेषः ।

ओं शुं शुक्राय नमः इति सौम्यदळे ।
ओं कं केतवे नमः इति ऐशान्यदळे ।

सोमं कुमुद[1]कुन्दाभं बुधं चामीकर[2]प्रभम् ।
गुरुं गोरोचनाभासं शुक्रं गोक्षीरसन्निभम् ॥ १६ ॥

रक्तमङ्गारकं ध्यायेत् राजा[3]वर्तनिभं शनिं ।
कृष्णं कृताञ्जलिं राहुं केतुं धूम्राहिसन्निभम् ॥ १७ ॥

कामरूपधरास्सर्वे दिव्याम्बरविभूषणाः ।
वामोरुन्यस्तहस्ताश्च दक्षहस्ताभयप्रदाः ॥ १८ ॥

ध्यानपूर्वं ग्रहानेवं पूजयित्वा यथाक्रमम् ।
धूपदीपादिनैवेद्यं देयं सर्वं खषोल्किना ॥ १९ ॥

मूलमन्त्रजपं कृत्ता यथाशक्ति समाहितः ।
अर्घ्यपात्राम्बुना भक्त्या भास्कराय निवेदयेत् ॥ २० ॥

स्तुत्वा प्रणम्य सम्पूज्य निवेद्यार्घ्यं पराङ्मुखम् ।
अभिधाय क्षमस्वेति फ[4]डन्तेन शराणुना ॥ २१ ॥

---

१. कुमुदः कैरवः । २. चामीकरप्रभं स्वर्णवर्णम् । ३. राजावर्तः कृष्णवर्णः पुष्पविशेषः । ४. फडन्तेन शराणुनेति अस्त्राय-हुंफडिति मन्त्रेणेत्यर्थः ।

[1]समाहृत्याणुसङ्घातं संहारिण्योपसंहृतिम् ।
हृत्पुण्डरीकमध्यस्थे शिवसूर्ये नियोजयेत् ॥ २२ ॥
ततः अं तेजश्चण्डाय नमः इति
अनेनाऽऽदित्यनिर्माल्यं चण्डेशाय निवेदयेत् ।
ई[2]शकाष्ठाप्रतिष्ठाय रवेरित्यर्चनाविधिः ॥ २३—९६ ॥

——:o:——

## शिवार्चनाविधिः ।

### शिवपूजाङ्गद्वारपूजा ॥

[3]अथाऽऽचम्य विधानेन [4]प्रणवार्घ्यकराम्बुजः ।
द्वारमस्त्राम्बुना प्रोक्ष्य द्वारपालान् प्रपूजयेत् ॥ १ ॥
ओं हां गणपतये नमः ।
ओं हां [5]सरस्वत्यै नमः ।
ओं हां महा[6]लक्ष्म्यै नमः इत्यूर्ध्वोदुम्बरे ।

---

१. समाहृत्याणुसङ्घातमिति अङ्गादिमन्त्रानुत्थाप्येत्यर्थः । २. ईशकाष्ठाप्रतिष्ठायेति ईशानदिशि संस्थितायेत्यर्थः । ३. अथाचम्येति सौरभावनानिवृत्यर्थमाचमनमिति भावः। यदा यदा समाचामेदिति पूर्वोक्त-वचनेन सकळीकरणमप्यावश्यकम् । ४. प्रणवार्घ्यकराम्बुज इति प्रणवाभिमन्त्रितरक्षावकुण्ठनामृतीकरणसहितसामान्यार्घ्यतीर्थपूरितपात्रहस्त इत्यर्थः । ५. सरस्वत्यै इति गणपत्युत्तरभागे इति शेषः । ६. महा-लक्ष्म्यै इति तयोर्मध्ये इति भावः ।

ओं हां नन्दिने नमः ।
ओं हां गङ्गायै नमः इति दक्षिणशाखायाम् ।
ओं हां महाकाळाय नमः ।
ओं हां यमुनायै नमः इति वामशाखायाम् ।

विघ्नोच्चाटनक्रमः ।

ओं हां हौं शिवाय नमः ।
दिव्यदृष्टिनिपातेन दिव्यानुपरिवर्तिनः ।
ज्वलन्नाराचशस्त्रेण[1] विघ्नान् क्षिप्त्वान्तरिक्षगान् ॥ २ ॥
दक्षपार्ष्णेस्त्रिभिर्घातैर्[2][3] भूमिष्ठांस्त्रिविधानपि ।
विघ्नानुच्चाटयेन्मन्त्री यागमन्दिरमध्यतः ॥ ३ ॥

शिवधामप्रवेशः ।

देहळीं[4] लङ्घयेत्किञ्चित् वामशाखां समाश्रयन् ।
प्रविश्य दक्षपादेन विन्यस्यास्त्रमुदुम्बरे[5] ॥ ४ ॥
ओं हां वास्त्वधिपतये ब्रह्मणे नम इति ब्रह्मस्थाने[6] पुष्पं दद्यात् ॥

---

१. नाराचशस्त्रेणेति नाराचमुद्रां कृत्वाऽस्त्रमन्त्रतः पुष्पप्रक्षेपेणेति भावः । २. दक्षपार्ष्णेरिति ओं हुं फडिति पाशुपतास्त्रमुच्चार्येति भावः । ३. घातैरिति आहतिभिरित्यर्थः । ४. देहळीं अधोदुम्बरम् । ५. विन्यस्यास्त्रमुदुम्बर इति देहळ्यां ओं हः अस्त्राय द्वारपालाय नमः इत्यस्त्रं सम्पूज्येत्यर्थः । ६. ब्रह्मस्थाने इति नैर्ऋते इत्यर्थः ।

शिवाभिषेकजलाहरणक्रमः ।

निरीक्षणादिभिश्शस्त्रैश्शुद्धानादाय गड्डुकान् ।
लब्धानुज्ञश्शिवान्मौनी गङ्गादिकमनुव्रजेत् ॥ ५ ॥
पवित्राङ्गप्रजप्तेन वस्त्रपूतेन वारिणा ।
पूरयेदस्त्रधौतांस्तान् गायत्र्या हृदयेन वा ॥ ६ ॥
गड्डुकाक्षतपुष्पादिसर्वद्रव्यसमुच्चयम् ।
सन्निधीकृत्य पूजार्थं भूतशुद्ध्यादिकं चरेत् ॥ ७ ॥

भूतशुद्ध्यर्थं जीवरक्षणप्रकारः ।

देवदक्षिणदिग्भागे सन्निविष्टस्सुखासने ।
उत्तरास्यो विनीतात्मा न्यस्तमन्त्रकरद्वयः ॥ ८ ॥
संहारमुद्रयाऽऽदाय मूर्तिमन्त्रेण विग्रहात् ।
भोग्यकर्मोपभोगार्थं विधानज्ञो हृदम्बुजे ॥ ९ ॥

---

१. निरीक्षणादिभिरिति ईक्षणप्रोक्षणताडनाभ्युक्षणैरित्यर्थः । २. शस्त्रैरिति मूलास्त्रकवचैरित्यर्थः । तथोक्तं कामिके "ईक्षणं मूलमन्त्रेण प्रोक्षणं चास्त्रमन्त्रतः । ताडनं चास्त्रमन्त्रेण वर्मणाभ्युक्षणं भवेत्" इति । ३. गड्डुकान् कलशान् । ४. पवित्राङ्गेति पवित्रै: पञ्चब्रह्मभिः अङ्गैः हृदयादिभिः । ५. सन्निविष्टः सम्यक् शास्त्रीयेण पद्मकस्वस्तिकादिनोपविष्टः । ६. सुखासने इति मृदुस्पर्शे कृष्णाजिनादावित्यर्थः । ७. विनीतात्मेति इन्द्रियार्थेभ्य उपसंहृतमनस्क इत्यर्थः । ८. न्यस्तमन्त्रकरद्वय इति अनेन करन्यास एवोच्यते अङ्गानामपि न्यासे भूतशुद्धिकाले दाहप्रसङ्गात् । ९. भोग्यकर्मोपभोगार्थमिति भोग्यत्वेन दीक्षायामसंपितस्य कर्मणः उपभोगार्थमिति भावः । १०. विधानज्ञ इति हृदयाद्याधारस्थानादिविधानज्ञ इत्यर्थः ।

पाणिकच्छपिकायां वा द्वादशान्तपदेऽथवा ।[1]
निधाय निजमात्मानं पञ्चभूतानि शोधयेत् ॥ १० ॥[2]

चरणाङ्गुष्ठयोर्युग्मात्सञ्चिन्त्य सुषिरं तनौ ।[3][4]
सुषिरान्तर्बहिश्शक्तिं व्यापिनीं चिन्तयेत्पुनः ॥ ११ ॥[5]

हूङ्कारे रन्ध्रमध्यस्थे प्रज्वलत्पावकप्रभे ।
विधाय प्राणसंरोधं चित्तं मन्त्री निवेशयेत् ॥ १२ ॥

रेचकेन फडन्तेन तेन हृद्गळतालुषु ।[6]
भ्रूमध्ये ब्रह्मरन्ध्रे च भित्वा ग्रन्थिं निवर्त्य च ॥ १३ ॥[7]

हूङ्कारं तारकाकारं जीवं हृदयसम्पुटम् ।[8]
पूरकाऽऽहृतचैतन्यं हूंशिखोपरि विन्यसेत् ॥ १४ ॥[9]

---

१. द्वादशान्तेति द्वादशान्तानिवेशनं निर्वाणदीक्षितानामेवेति केचित् । २. निजमात्मानमिति पुर्यष्टकावच्छिन्नमात्मानमित्यर्थः । ३. चरणाङ्गुष्ठयोर्युग्मादिति युग्मात्प्रभृति ब्रह्मरन्ध्रपर्यन्तमिति शेषः । ४. सञ्चिन्त्येति पादाङ्गुष्ठद्वयात्प्रभृति मूलाधारपर्यन्तं द्विरूपां तदारभ्य ब्रह्मरन्ध्रपर्यन्तमेकरूपां सुषिरं सुषुम्नानाडीं विभाव्येति भावः । ५. शक्तिं कुण्डलिनीशक्तिम् । ६. रेचकेन फडन्तेनेति हूंफडिति पञ्चवारोच्चारणादिति भावः । ७. निवर्त्यचेति हूङ्कारमित्यनेनान्वयः । ८. हृदयसम्पुटमिति ह्यामिति हृद्बीजमध्यगतमिति भावः । ९. पूरकाहृतचैतन्यमिति पूरकवायुना संहृतं दृक्क्रियारूपचैतन्यं यस्य सः तम् ।

संशुद्धं बिन्दुभूतं[1] च ध्यात्वा कृत्वा च कुम्भकम् ।
रेचकेन शिवे विद्वानेकोद्घातेन[2] योजयेत् ॥ १५ ॥

सूक्ष्मदेहशुद्धिः ।

बीजवृत्त्या[3] शिवे लीनैः[4] प्रातिलोम्यं स्वहेतुषु ।
तत्वानि बिन्दुपर्यन्तं लयं[5] नीत्वा विशोधयेत् ॥ १६ ॥

परस्परशोधनरूपा स्थूलदेहशुद्धिः ।

पृथ्वीवायू पयोवह्नी द्वौ द्वौ शोध्यौ परस्परम् ।
आकाशं चाविरोधेन[6] यथा शोध्यं तदुच्यते ॥ १७ ॥

---

१. बिन्दुभूतमिति परमकारणबिन्दुस्वरूपमित्यर्थः । २. उद्घातेनेति ऊर्ध्वं घातः उद्घातः उदानवृत्त्या वायोः द्वादशान्तं यावत्प्रेरणं तेनेति भावः । ३. बीजवृत्त्येति मन्त्रबीजवृत्त्या नादात्मनेति भावः । पुर्यष्टकदेहशुद्ध्याऽशरीरिण आत्मनः कथं द्वादशान्तपर्यन्तं नेयत्वसम्भवः इत्याशङ्कायामिदं समाधानम् । ४. लीनः पूजकात्मेति शेषः । ५. लयं नीत्वेति लयप्रकारस्तु गन्धादितन्मात्रापञ्चके पृथ्व्यादितत्वपञ्चकं एतास्तन्मात्रास्तामसाहङ्कारे वाक्पाणिपादपायूपस्थाख्यानि राजसाहङ्कारे श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि मनश्च सात्विकाहङ्कारे सच बुद्धौ सा च गुणेषु गुणतत्वं प्रकृतौ सा रागविद्ये च कलायां पुंस्तत्वं कालो नियतिः कला च मायायां लीनानि विभाव्य शुद्धविद्यातत्वमीश्वरतत्वे तत्सदाशिवतत्वे तच्छक्तितत्वे तच्च शिवतत्वे तदपि निर्विकाररूपायां कुण्डलिन्यां लयं गच्छतीति प्रातिलोम्येन तत्वलयक्रमः । ६. अविरोधेनेति अविरोधश्चात्र स्वस्य स्वेतरचतुष्कान्यतरपरः । परशक्त्यात्मकपरमाकाशस्य शिवार्चनाचन्द्रिकायां तद्विरुद्धत्वेनोक्तेः ।

पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम् ।
ह्लां[1]मित्यनेन बीजेन तन्नि[2]वृत्तिकलामयम् ॥ १८ ॥
पादादारभ्य मूर्धान्तं विचिन्त्य चतुरश्रकम् ।
संयुक्तं सद्यमन्त्रेण विरिञ्चिश्चात्र कारणम् ॥ १९ ॥
उद्घा[3]तपञ्चकेनैव वायु[4]भूतं विशोधयेत् ।
अर्धचन्द्रनिभं सौम्यं शुभ्रमम्भोजलाञ्छितम् ॥२०॥
ह्रींमित्यनेन बीजेन प्रतिष्ठारूपतां गतम् ।
संयुक्तं वाममन्त्रेण पुं[5]रुषोत्तमकारणम् ॥ २१ ॥
आप्यं चतुर्भिरुद्घातैर्वह्निभूतं विशोधयेत् ।
आग्नेयमण्डलं त्र्यश्रं रक्तं स्वस्तिकलाञ्छितम् ॥२२॥
ह्रूमित्यनेन बीजेन विद्यारूपं विभावयेत् ।
घोरेण त्रिभिरुद्घातैर्जलभूतं विशोधयेत् ॥ २३ ॥
षडश्रमण्डलं वायुं बिन्दुभिष्षड्भिरन्वितम् ।
कृष्णं ह्रैमिति विज्ञेयं शान्तं शान्तिकलामयम् ॥२४॥

---

१. ह्लामिति बीजस्य ध्यानेनोच्चारणेनवेत्यर्थः । २. तन्निवृत्तीति निवृत्तिकलाधिष्ठितमिति भावः । ३. उद्घातेति पृथिव्यां पञ्चगुणनाशाय तत्संख्याकोद्घाता उक्ताः एवमन्यत्राप्यूहनीयः । ४. वायुभूतमिति वाय्वाकारापन्नमिति भावः । ५. पुरुषोत्तमेति पुरुषान्तमकारणमिति पाठे पुरुषान्तं पुरुषतत्त्वान्तव्यापिकं अकारणं विष्णुकारणमित्यर्थो ज्ञेयः ।

सञ्चिन्त्योद्घातयुग्मेन पृथ्वीभूतं विशोधयेत् ।
नभो बिन्दुमयं[1] भूतं बिन्दुशक्तिविभूषितम् ॥ २५ ॥
व्योमाकारं सुवृत्तं च शुद्धस्फटिकनिर्मलम् ।
हौङ्कारेण तु बीजेन शान्त्यतीतकलामयम् ॥ २६ ॥
ईशमन्त्रेण संयुक्तमधिदैवं सदाशिवम् ।
ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥ २७ ॥
आप्लावयेत्ततस्सर्वं मूलेनामृतवर्षिणा ।

द्वादशान्तस्थजीवस्य हृदि स्थापनक्रमः ।

आधाराख्यमनन्तञ्च धर्मज्ञानादिपञ्चकम् ॥ २८ ॥
हृद्यासनमिदं दत्वा मूर्तिमावाहयेत्ततः[2] ।
सृष्ट्या शिवमयं[3] तस्यामात्मानं द्वादशान्ततः ॥ २९ ॥
अथ तं शक्तिमन्त्रेण[4] वौषडन्तेन सर्वतः ।
दिव्यामृतेन संप्लाव्य कुर्वीत सकलीकृतिम्[5] ॥ ३० ॥

सकलीकरणक्रमः ।

हृदयादिकरान्तेषु कनिष्ठाद्यङ्गुळीषु च ।
हृदादिमन्त्रविन्यासस्सकळीकरणं मतम् ॥ ३१ ॥

---

१. बिन्दुमयमिति बिन्दुशब्देनोपचाराद्बिन्दुकार्यश्शब्दो विवक्षितः । अतश्च बिन्दुमयमित्यस्य शब्दगुणमित्यर्थः । २. मूर्तिमावाहयेदिति मूर्तिशब्देन पुर्यष्टकदेह उच्यते । ३. शिवमयमिति शिवीभूतमित्यर्थः । ४. शक्तिमन्त्रेण वौषडन्तेनेति ओं हौं शक्तये वौषडिति मन्त्रेणेत्यर्थः । ५. सकळीकृतिमिति विस्तरस्तु क्रियाक्रमद्योतिकाशिवार्चनाचन्द्रिकादितो ज्ञेयः ।

स्थानशुद्धिः ।

क्षिपेत्काष्ठासु सर्वासु ताळत्रयपुरस्सरम् ।
च्छोटिकाभिश्शिवस्यास्त्रं रक्षार्थं विघ्न[1]वारणम् ॥ ३२ ॥
प्राका[2]रं च तनुत्रेण तद्बहिः परिखान्वितम् ।
श[3]क्तिजालमध[4]श्चोर्ध्वं ततश्चामृततितां नयेत् ॥ ३३ ॥
दर्शयित्वा महामुद्रामापादतलमस्तकम् ।

अन्तर्यागः ।

भावोपनीतपुष्पाद्यैः हृदम्भोजे शिवं यजेत् ॥ ३४ ॥

अन्तरग्निकार्यविधिः ।

पूरका[5]कृष्टपिय्यूषहविषाथ शि[6]वाणुभिः ।
नाभिकुण्डे स्वतस्सिद्धे त[7]र्पयेत्[8]तं शिवानले ॥ ३५ ॥
निर्भर्त्सितशरच्चन्द्रबिन्दुरूपं महेश्वरम् ।
ल[9]लाटपट्टमध्यस्थं चिन्तयेत् शुभ्रविग्रहम् ॥ ३६ ॥

---

१. विघ्नवारणमिति कृत्वेति शेषः । २. प्राकारंचेति अस्त्रेण कृत्वेति शेषः । ३. शक्तिजालमिति धेनुमुद्रां कृत्वा ओं हां हौं शक्तये नमः इति मन्त्रमुच्चार्येति शेषः । ४. अधश्चोर्ध्वमिति विभाव्येति शेषः । ५. पूरकेति द्वादशान्तस्थानादिति शेषः । ६. शिवाणुभिरिति शिवासनशिवमूर्तिशिवमन्त्रैरावाह्येति शेषः । ७. तर्पयेदिति ओं हां शक्तये वौषडिति मन्त्रत इति शेषः । ८. तं शिवमिति भावः । ९. ललाटपट्टमध्यस्थं भ्रूमध्यस्थमिति भावः ।

## शिवार्घ्यकरणविधिः ।

एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितम्[1] ।
बिन्दुप्रसृतपिय्यूषरूपतोयाक्षतादिना ॥ ३७ ॥
हृदा[2]ऽऽपूर्य षडङ्गेन पूजयित्वाऽभिमन्त्रयेत्[3] ।
संरक्ष्य हेतिमन्त्रेण[4] कवचेनाऽवकुण्ठयेत् ॥ ३८ ॥
रचयित्वार्घ्यमष्टाङ्गं[5] रोचयेद्धेनुमुद्रया ।

## द्रव्यशुद्धिः ।

अभिषिञ्चेदथाऽऽत्मानं[6] मूर्ध्नि तत्तोयबिन्दुना ॥ ३९ ॥
तत्रस्थं यागसम्भारं प्रोक्षयेदस्त्रवारिणा ।
अभिमन्त्र्य हृदा भाण्डं तनुत्राणेन वेष्टयेत् ॥ ४० ॥
दर्शयित्वाऽमृतीमुद्रां[7]

## आत्मपूजा ।

पुष्पं दत्वा निजासने ।
विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥ ४१ ॥

---

१. अस्त्राम्बुशोधितं अस्त्रेण प्रक्षाळयेति भावः । २. हृदेति वौषडन्तेनेति शेषः । ३. अभिमन्त्रयेदिति संहितयेति शेषः । ४. हेतिमन्त्रेण अस्त्रमन्त्रेण । ५. अष्टाङ्गमिति "आपः क्षीरं कुशाग्राणि तण्डुलास्सुमनास्तिलाः । अर्घ्योऽष्टाङ्ग इति प्रोक्तः यवैस्सिद्धार्थकैस्सह ।" ६. अथाऽऽत्मानमिति द्रव्यान्तरवत्पूजोपकरणत्वेन आत्माऽपि द्रव्यशुद्धावन्तर्गतः । ७. दर्शयित्वामृतीमुद्रामिति धेनुमुद्रयाऽमृतीकरणं विरच्येति भावः ।

स्नाने देवार्चने होमे भोजने यागयोगयोः ।
आवश्यके जपे धीरस्सदा वाचंयमो भवेत् ॥ ४२ ॥

मन्त्रशुद्धिः ।

नादान्तोच्चारणान्मन्त्रं शोधयित्वा[1]

लिङ्गशुद्धिः ।

पुराकृताम् ।
पूजामभ्यर्च्य गायत्र्या[2] सामान्यार्घ्यमुपाहरेत् ॥ ४३ ॥
ब्रह्मपञ्चकमावर्त्य[3] माल्यमादाय[4] लिङ्गतः ।
ऐशान्यां दिशि चण्डाय हृदयेन निवेदयेत्[5] ॥ ४४ ॥
प्रक्षाल्य पिण्डिकालिङ्गे ह्यस्त्रतोयैस्तदा हृदा ।
अर्घ्यपात्रांबुना सिञ्चेदिति लिङ्गविशोधनम् ॥ ४५ ॥
इत्थमात्माश्रयद्रव्यमन्त्रलिङ्गविशुद्धिषु ।
कृतासु देवदेवस्य पूजनं नान्यथा भवेत् ॥ ४६ ॥

---

१. **शोधयित्वेति** मन्त्राणां दन्तताल्वोष्ठव्यापारजन्यमायिकाऽशुचिरूपनिर्हरणार्थं ऐश्वर्याधिकारमलतिरोहितफलप्रदानसामर्थ्यादीनां तेषां सामर्थ्योन्मीलनार्थं च शुद्धिः कर्तव्येति भावः । शोधनप्रकारस्तु ब्रह्मणां ह्रस्वक्रमेण विन्द्वन्तोच्चारणं अङ्गानां दीर्घक्रमेण ब्रह्मरन्ध्रान्तोच्चारणं मूलमन्त्रस्य प्लुतक्रमेण द्वादशान्तपर्यन्तोच्चारणमिति भावः । २. **गायत्र्येति** अभ्यर्च्येत्यनेनान्वयः । ३. **ब्रह्मपञ्चकमावर्त्येति** कनिष्ठाद्यङ्गुळीभिः सद्यादिशिरस्स्पर्शनक्रमेण नैष्ठिको विन्यसेत् । भौतिकस्तु ईशानादिक्रमेण पञ्चशिरस्सु अर्घ्यं अङ्गुष्ठादिभिर्न्यासं च कुर्यादित्यर्थः । ४. **आदायेति** अङ्गुष्ठतर्जनीभ्यामस्त्रमन्त्रेणेति शेषः । ५. **निवेदयेदिति** ओं हां चण्डायेदं इति वचनेन इति भावः ।

गणेशकमलागुरुपङ्क्तिपूजा ।

तत्र पीठस्य वायव्यां दिशि ओं हां गणपतये नमः ।
उत्तरे ओं हां महालक्ष्म्यै नमः ।
ईशाने ओं हां श्रीगुरुभ्यो नमः ।

शिवासनपूजाविधिः ।

ततः[1] कूर्म[2]शिलासीनां क्षीरोदसितविग्रहाम् ।
यजेद्बी[3]जाङ्कुराकारां शक्तिमाधाररूपिणीम् ॥ ४७ ॥
ओं हां आधारशक्तये नमः ।
कुन्देन्दुधवळोद्दण्डपयोजमुकुळाकृतिम् ।
यजेत्कूर्मशिलारूढं शिवस्याऽनन्तमासनम् ॥ ४८ ॥
ओं हां अनन्तासनाय नमः ।
ओं हां अनन्ताय नमः ।
विचित्रकेसरिप्र[4]ख्यानन्योन्यं पृष्ठदर्शि[5]नः ।
कृतत्रेतादिरूपेण शिवस्यासनपादुकान् ॥ ४९ ॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ।
कर्पूरकुङ्कुमस्वर्णकज्जलाभानि पूजयेत् ॥ ५० ॥

---

१. ततः इति ततः पश्चात् अधः इति पाठे तु शुद्धाऽशुद्धनिखिलजगतामधः प्रदेशे इत्यर्थः । २. कूर्मशिलेति आधारशिलेत्यर्थः । ३. बीजाङ्कुराकारां कुटिलस्वरूपामिति भावः । ४. प्रख्यान् निभान् । ५. दर्शिन इति दर्शयितारः न तु द्रष्टारः ।

ओं हां धर्माय नम इत्याग्नेय्याम् ।
ओं हां ज्ञानाय नम इति नैर्ऋत्याम् ।
ओं हां वैराग्याय नम इति वायव्याम् ।
ओं हां ऐश्वर्याय नम इति ऐशान्याम् ।
उत्फुल्लाष्टदळं श्वेतं तदेवानन्तपङ्कजम् ।
सम्पूज्य सिंहवक्त्रोर्ध्वे पद्ममुद्रां प्रदर्शयेत् ॥ ५१ ॥
ओं हां पद्माय नमः ।
तप्तचामीकरच्छायां पञ्चाशद्बीजगर्भिताम्[1] ।
केसराणां चतुष्षष्ट्या कर्णिकां[2] पूजयेत्ततः ॥ ५२ ॥
ओं हां कर्णिकायै नमः ।
उद्यद्दिनकराभासाः त्रिनेत्राश्च चतुर्भुजाः ।
जटामकुटखण्डेन्दुमण्डिता धृतचामराः ॥ ५३ ॥
वरदाभयहस्ताश्च शिवासक्तकराम्बुजाः ।
पूर्वादीशान्तपत्रस्थकेसराग्रेष्वनुक्रमात् ॥ ५४ ॥
शक्तीस्सम्पूजयेदष्टौ नमोमुद्रां प्रदर्शयेत् ।
गोक्षीरधवळां शक्तिं कर्णिकायां मनोन्मनीम् ॥ ५५ ॥
ओं हां वामायै नमः । ओं हां ज्येष्ठायै नमः ।
ओं हां रौद्र्यै नमः । ओं हां काळ्यै नमः ।

---

१. **बीजगर्भितां** वर्णगर्भितामिति भावः । २. **कर्णिका**मिति समस्तवाचककारणभूतपञ्चाशदक्षरसहितपरमाकाशरूपां परमकुण्डलिनीमिति भावः ।

ओं हां कलविकरण्यै नमः। ओं हां बलविकरण्यै नमः।
ओं हां बलप्रमथिन्यै नमः। ओं हां सर्वभूतदमन्यै नमः।
ओं हां मनोन्मन्यै नमः।
क्षित्यादिशुद्धविद्यान्ततत्वव्यापकमासनम् ।
सञ्चिन्त्य देवदेवस्य पूजयेत्तदनन्तरम् ॥ ५६ ॥
ओं हां शिवासनाय नमः ।

विद्यादेहध्यानम्।

तत्र सिंहासने देवं शुद्धस्फटिकनिर्मलम् ।
पञ्चास्यं दशदोर्दण्डं प्रतिवक्त्रं त्रिलोचनम् ॥ ५७ ॥
जटामकुटशोभाढ्यं स्फुरच्चन्द्रार्धशेखरम् ।
शक्त्यसीशूलखट्वाङ्ग[1]वरव्यग्रकराम्बुजम् ॥ ५८ ॥
दक्षिणे वामहस्तेऽथ डमरुं[2] बीजपूरकम्[3] ।
नागाक्षसूत्रं नीलाब्जं बिभ्राणं पञ्चभिः करैः ॥ ५९ ॥
द्वात्रिंशल्लक्षणोपेतं बद्धपद्मासनस्थितम् ।
सादाशिवां न्यसेन्मूर्तिं शैवीं शक्त्यन्तगोचराम् ॥६०॥
ओं हां हं हां शिवमूर्तये नमः ।
सम्पूजयेदनेनैव

शिवाऽऽवाहनक्रमः ।

सर्वेशं सर्वगं प्रभुम् ।
सर्वज्ञं सर्वकर्तारं बोधानन्दमयं[4] विभुम् ॥ ६१ ॥

---

१. खट्वाङ्गः योगोपकरणविशेषः । २. डमरुं क्षुद्रदुन्दुभिम् । ३. बीजपूरकं मातुळङ्गफलम् । ४. बोधानन्दमयं नात्र आनन्दशब्दः सन्तुष्टिपरः । किन्तु परिपूर्तिवाचकः । ततश्च चिद्धन इति यावत् ।

निष्कळं स्वप्रकाशं च सञ्चिन्त्य परमं शिवम् ।
ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् ॥ ६२ ॥

ततो ललाटमध्यस्थं स्फुरत्तारापतिप्रभम् ।
षडङ्गेन समायुक्तं बिन्दुरूपं परं शिवम् ॥ ६३ ॥

पुष्पाञ्जलिगतं ध्यात्वा लक्ष्यमूर्तौ[1] नियोजयेत्[2] ।
आवाहिन्या हृदाऽऽवाह्य स्थापन्या स्थाप्य शङ्करम् ॥

सन्निधानान्तिकं[3] कृत्वा निष्ठुर्या च निरोधयेत् ।
कालकण्ठ्या फडन्तेन विघ्नानुत्सार्य मुष्टिना ॥ ६५ ॥

लिङ्गमुद्रां नमस्कारान् हृदा बध्वाऽवकुण्ठयेत् ।

आवाहनादीनामर्थविचारः ।

सादरं सम्मुखीभावो ह्यावाहनमिहोच्यते ॥ ६६ ॥

भक्त्या निवेशनं तत्र सान्निध्यं कथितं बुधैः ।
जगन्नाथ तवास्मीति यत्स्वीकारोपदर्शनम् ॥ ६७ ॥

विभुत्वेऽपि तदीशस्य सन्निधानं न बाध्यते ।
आकर्मकाण्डपर्यन्तं सन्निधेयापरिक्षयः ॥ ६८ ॥

स शम्भोर्व्यापकत्वेऽपि निरोधः परिगीयते ।
शिवस्यानन्तबीजस्य बोधाऽऽनन्दमयस्य च ॥ ६९ ॥

---

१. लक्ष्यमूर्तौ विद्यादेहे इत्यर्थः । २. नियोजयेदिति हृदयमुच्चार्येति भावः । ३. सन्निधानान्तिकमिति अन्तिकस्थमिति भावः ।

अभक्तेष्वप्रकाशो यः तद्भवेदवकुण्ठनम् ।

आवाहनाद्यनन्तरकरणीयविधिः ।

सकळीकरणं कृत्वा मन्त्रैःषड्भिरथैकताम्[1] ॥ ७० ॥

अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् ।

यथाऽधृष्यस्समर्थश्च मार्ताण्डश्चण्डरश्मिभिः ॥ ७१ ॥

तद्वदङ्गैर्निजैर्देवो ध्यातव्यः परमेश्वरः ।

हृदयाद्यङ्गानामर्थविचारः ।

हृदयं तस्य चिच्छक्तिः शिरश्चैश्वर्यमष्टधा ॥ ७२ ॥

नान्याधीनं शिवत्वं यत् सा शिखोपरिवर्तिनी ।

अभेद्यमरिभिश्शस्त्रैस्तेजः कवचमुच्यते ॥ ७३ ॥

प्रतापोदुस्सहश्चास्त्रमन्तरायापहारकम् ।

पाद्यादिविधिः ।

नमस्स्वधा च स्वाहा च वौषट् चेति यथाक्रमम् ॥

हृत्पुरस्सरमुच्चार्य पाद्यादीनि निवेदयेत्[2] ।

पाद्यं पादाम्बुजद्वन्द्वे वक्त्रेष्वाचमनीयकम् ॥ ७५ ॥

अर्घ्यं शिरस्सु देवस्य पुष्पदूर्वाक्षतानि च ।

एवं संस्कृत्य संस्कारैः दशभिः[3] परमेश्वरम् ॥ ७६ ॥

---

१. एकतामिति एकत्वमित्यर्थः मूलेन विधायेति शेषः । २. निवेदयेत् इति विशेषार्घ्येणेति शेषः । ३. दशभिरिति आवाहनस्थापनसान्निध्यसन्निरोधनसकळीकरणैकत्वपाद्याचमनार्घ्यपुष्पदानाद्यैरित्यर्थः ।

यजेत्पञ्चोपचारेण विधिना कुसुमादिभिः ।

अभिषेकविधिः ।

अभ्यज्योद्वर्त्य निर्मृच्य राजिकायवजादिभिः ॥ ७७ ॥
अर्घ्योदबिन्दुपुष्पाद्यैर्गड्डुकैस्स्नापयेच्छनैः ।
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ॥ ७८ ॥
ईशादिमन्त्रितैर्भुक्त्यै मुक्त्यै तेषां विपर्ययः ।
तोयधूपान्तरैस्सर्वैर्मूलेन स्नापयेच्छिवम् ॥ ७९ ॥
विरूक्ष्य यवचूर्णेन यथेष्टं शीतलैर्जलैः ।
स्वशक्त्या गन्धतोयेन संस्नाप्य जगदीश्वरम् ॥ ८० ॥
परिशुद्धेन वस्त्रेण विमृज्यार्घ्यं निवेदयेत् ।
अधो न बन्धयेन्मुद्रां नोपरि भ्रामयेत्करम् ॥ ८१ ॥
सर्वदा कुसुमैः कुर्यात् देवस्याऽशून्यमस्तकम् ।

अभिषेकाऽनन्तरकरणीयविधिः ।

चन्द्रचन्दनकाश्मीरैः समालिप्य सुगन्धिभिः ॥ ८२ ॥

---

१. पञ्चेति गन्धपुष्पाद्यैः पार्थिवैः पयोवस्त्राद्यैराप्यैः रत्नदीपाभरणाद्यैराग्नेयैः चामरधूपाद्यैर्वायव्यैः गेयवाद्याद्यैः नाभसैः इति भावः । २. राजिकेत्यादि राजिकाजैः यवजैः आदिशब्दवाच्यैः हरिद्रादिभिः यथासंख्यं अभ्यज्योद्वर्त्यनिर्मृच्येत्यन्वयः राजिका असितसर्षपः । ३. गड्डुकैः स्नपनतीर्थसहितैः कलशैः । ४. तोयधूपान्तरैः अन्तरान्तरा शुद्धजलाभिषेकपूर्वं शिरश्शिखानेत्रैः पुष्पधूपदीपान् कारयेदित्यर्थः । ५. चन्द्रः कर्पूरः । ६. काश्मीरैः कुङ्कुमैः ।

पुष्पैराभरणैर्वस्त्रैः समभ्यर्च्य शिवाणुना ।
धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाणुना ॥ ८३ ॥
अस्त्रेण पूजितां घण्टां[1] वादयन् गुग्गुलुं दहेत् ।
दद्यादाचमनं पश्चात् स्वधान्तहृदयाणुना ॥ ८४ ॥
आरात्रिकं समुत्तार्य तथाचाचामयेत्पुनः ।

भोगाङ्गपूजाविधिः ।

प्रणम्याऽऽदाय देवाज्ञां भोगाङ्गानि प्रपूजयेत् ॥ ८५ ॥
अग्नीशासुरवायूनां दिक्षुचत्वार्यनुक्रमात् ।
हृदयं चन्द्रसङ्काशं शिरश्चामीकरप्रभम् ॥ ८३ ॥
शिखां सिन्दूरवर्णाभां कवचं भृङ्गभास्वरम् ।
पद्मासनस्थानर्धेन्दुजटामकुटधारिणः ॥ ८७ ॥
त्रिलोचनांश्चतुर्बाहून् सर्वाभरणभूषितान् ।
शिवस्याभिमुखान् शक्तिशूलाभयवरान्वितान् ॥ ८८ ॥
चतुर्वक्त्रान् निजैर्मन्त्रैः पूजयेद्दळसंस्थितान्[2] ।
दंष्ट्राकराळमत्युग्रमस्त्रञ्चाशनिसप्रभम् ॥ ८९ ॥

---

१. घण्टामिति एकनादस्तु मोक्षाय विरक्तानां प्रशस्यते। घण्टाताडनमेवं स्यात् द्विनादो भोगमोक्षदः । जानुनाभेरधो नादः कर्तव्यो न कदाचन । नाभेरूर्ध्वं तु कर्तव्यं घण्टाताडनमुत्तमं इति घण्टाताडनलक्षणम् ।
२. पूजयेद्दळसंस्थितानिति आवाहनादिनैतानि स्वमन्त्रैः क्रमशोऽर्चयेत् । नावकुण्ठनमेतेषाममृतीकरणं तथा । संस्काराष्टकमेवैषां प्रत्येकं विहितं बुधैः । स्नपनं धूपदीपौ च न पृथक् चाङ्गभावतः । भोजनं तु प्रभोः पार्श्वे तेषां तस्य च कीर्तितम् । इत्युक्तेः ब्रह्माङ्गानां संस्काराष्टकमेव ।

लिङ्गं पूर्वाद्युदीच्यन्तं चतुर्दळगतं यजेत् ।
धूपदीपादि नैवेद्यं तोयमाचमनीयकम् ॥ ९० ॥
करोद्वर्तनताम्बूलमुखवासं च दर्पणम् ।
दद्यात्सपरिवाराय मूलमन्त्रेण शम्भवे ॥ ९१ ॥

पवित्रारोपणविधिः ।

शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम्[1] ।
स्तूयमानं विरिञ्च्याद्यैः सन्तुष्टं भावयेच्छिवम् ॥९२॥

मूलमन्त्रजपविधिः ।

मानसोपांशुभाष्याणां[2] कुर्यादेकतमं जपम् ।
मूलस्याष्टशतं जप्त्वा न द्रुतं न विलम्बितम् ॥ ९३ ॥
हृदाभिमन्त्रितं वर्मवेष्टितं खड्गरक्षितम् ।
कुशपुष्पाक्षतोपेतं मुद्रयोद्भवसंज्ञया ॥ ९४ ॥
गुह्यातिगुह्यगोप्ता[3] त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे येन त्वत्प्रसादात्त्वयि[4] स्थिते ॥ ९५ ॥

---

१. दूर्वाक्षतपवित्रकमिति । दूर्वाक्षतसहितपुष्पं अञ्जलौ निवेश्य मूलेन शिरस्यारोपयेदिति भावः । २. मानसेत्यादि मानसं मनसा निर्वर्त्त्यं ओष्ठस्पन्दनमात्रेणोपांशुः । परेषां श्रृण्वतां शब्दजनकः भाष्यः । यथा-संख्यं सात्विकादिक्रमेण ज्ञेयम् । ३. गुह्यातिगुह्येति गुह्यातिगुह्याख्य-मन्त्रतत्वपरिपालकस्त्वमेवेत्यर्थः । ४. त्वयि स्थिते इति । जपे इति शेषः ।

भोगी[1] श्लोकं पठित्वा तु दक्षहस्तेन शम्भवे ।
मूलाणुनार्घ्यतोयेन वरहस्ते निवेदयेत् ॥ ९६ ॥
यत्किञ्चित्कर्म देवेश सदा सुकृतदुष्कृतम् ।
तन्मे शिवपदस्थस्य भुङ्क्ष्व[2] क्षपय[3] शङ्कर ॥ ९७ ॥
शिवो दाता[4] शिवो भोक्ता[5] शिवस्सर्वमिदं जगत्[6] ।
शिवो[7] यजति सर्वत्र यश्शिवस्सोऽहमेव तु ॥ ९८ ॥
श्लोकद्वयमधीत्यैवं शिवार्पितमना मुनिः ।
जपन्मुमुक्षुर्देवाय तथैव विनिवेदयेत् ॥ ९९ ॥
दशांशेन शिवाङ्गानां जपं कृत्वा निवेद्य च ।
अर्घ्यं धूपादिकं दत्वा स्तुत्वा च विविधैस्स्तवैः ॥
शिवं प्रदक्षिणीकृत्य[8] सन्तुष्टं सपरिग्रहम् ।
भक्त्या प्रणाममष्टाङ्गं[9] विदध्यादष्टमूर्तये ॥ १०१॥

---

१. भोगी भौतिकदीक्षावानित्यर्थः । २. भुङ्क्ष्वेति सुकृतमित्यनेनान्वयः । पालयेत्यर्थः आत्मनेपदस्तु च्छान्दसः । अथवा भोगार्थसुकृतानिच्छोः मुक्त्यर्थिनः सुकृतं भुङ्क्ष्वेत्यर्थः । ३. क्षपयेति । दुष्कृतमित्यनेनान्वयः । ४. दातेति शोधयितेति विशेषार्थः । ५. भोक्ता पालयिता । ६. जगदिति ईष्टे इति वा अधितिष्ठति इति वा शेषः । ७. शिवो यजतीति अत्र शिवशब्दः आराधकशिवः । यजति सर्वाधिकरणेषु शोधयितृत्वादिधर्मविशिष्टं शिवं पूजयतीति शेषः । ८. प्रदक्षिणीकृत्येति त्रिवारमिति शेषः । पदात्पदान्तरं गच्छेत्करौ चलनवर्जितौ । स्तुतिर्वाचा हृदि ध्यानं चतुरङ्गं प्रदक्षिणं इति प्रदक्षिणलक्षणम् । ९. अष्टाङ्गमिति शिरसा हस्ताभ्यां कर्णाभ्यां चिबुकेन बाहुभ्यां च भुवं संस्पृश्य क्रियमाणमष्टाङ्गमिति भावः ।

स[1]माधिना त[2]पोध्यानधार[3]णाभाव[4]नाज[5]पैः ।।
निजमूर्तौ गुरोर्मूर्तौ पु[6]स्तके स[7]लिलेऽ[8]नले ॥ १०२ ॥
चित्रादौ स्थण्डिले वापि लिङ्गेप्यत्यन्तमुत्तमम् ।
यजनं बहुधा शम्भोः यथादृष्टमुदाहृतम् ॥ १९९ ॥

——:o:——

## अग्निकार्यविधिः ।

### अग्निस्थानगमनविधिः ।

अथेशाऽऽदेशमादाय यायादग्निनिकेतनम् ।
प्रदक्षिणं स[9]सम्भारम[10]र्घ्यपात्रकरो मुनिः ॥ १ ॥
यागोपकरणं सर्वं दि[11]व्यदृष्ट्याऽवलोकयन् ।
कुण्डनाभिं पुरस्कुर्वन्नुपविश्योत्तराननम् ॥ २ ॥

### कुण्डसंस्कारविधिः ।

[12]निरीक्षणं च कुण्डस्य प्रोक्षणं ताडनं कुशैः ।
विदध्यादस्त्रमन्त्रेण वर्मणाभ्युक्षणं मतम् ॥ ३ ॥

---

१. समाधिनेति तदर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । २. तप इति प्राणायामस्त्वत्र परन्तपः । ३. धारणेति चित्तस्य बन्धनमित्यर्थः । ४. भावना मनसो व्यापारः । ५. जपैरिति ध्येयसंमुखीकरणार्थं तद्वाचकमन्त्रभाषणैरित्यर्थः । ६. पुस्तके विद्यापीठे । ७. सलिले कुम्भस्थे । ८. अनले शिवाग्नौ । ९. ससम्भारं सोपकरणम् । १०. अर्घ्येति सामान्यार्घ्यपात्रहस्तइत्यर्थः । ११. दिव्यदृष्ट्यापरचक्षुषा । १२. निरीक्षणंचेति अनामिकाङ्गुष्ठाभ्यां न्यस्तमूलेन चक्षुषोर्द्वयेनेति शेषः ।

खड्गेन[1] खातमुद्धारं पूरणं समतामपि ।
कुर्वीत वर्मणा सेकं कुट्टनं[2] तु शराणुना ॥ ४ ॥
सम्मार्जनं समालेपं कलारूपप्रकल्पनम्[3] ।
त्रिसूत्रीपरिधानं च वर्मणाभ्यर्चनं[4] हृदा ॥ ५ ॥
रेखात्रयमुदक्कुर्यादेकां[5] पूर्वाननामथ ।
कुशेन शिवमन्त्रेण यद्वा तासां त्रिपर्ययः ॥ ६ ॥
वज्रीकरणमस्त्रेण[6] हृदा दर्भैश्चतुष्पथम्[7] ।

वागीश्वरीवागीश्वराऽऽवाहनम् ।

अक्षपाटं[8] तनुत्रेण विन्यसेद्विष्टरं हृदा ॥ ७ ॥
अतसीपुष्पसङ्काशां तत्र देवीं सलक्षणाम् ।
तद्वद्वागीश्वरं देवं हृदा विन्यस्य पूजयेत् ॥ ८ ॥

---

१. खड्गेनेति अस्त्रेणेत्यर्थः । २. कुट्टनमिति दार्ढ्यापादनसंस्कारः । खननादिकमेतन्मनसा विधेयमिति भावः । ३. कलारूपप्रकल्पनमिति । मेखलाया अन्तराळं कुण्डपूर्वादिदिक्स्थितमेखलाश्च निवृत्त्यादिकलामयं यथा तथा परिकल्प्येति शेषः । ४. अभ्यर्चनमिति ओं हां कलामयाय कुण्डाय नमः इति मन्त्रेणेति शेषः । ५. उदक्कुर्यादिति । उदगाननश्चेद्गुरुः उदगाननं रेखात्रयं प्रागाननश्चेत्प्रागाननं रेखात्रयं च कुर्यादित्यर्थः । ६. वज्रीकरणमिति मूलाग्रयोस्त्रिशूलाकृतिना कुशत्रयेणेति भावः । ७. चतुष्पथमिति पूर्वोत्तराग्रदर्भद्वयेनेति शेषः । ८. अक्षपाटमिति समन्ताद्विन्यस्तदर्भैः तिरस्करिणीशाटीमित्यर्थः ।

### वह्निविन्यासः ।

वह्निं सदा[1]श्रयानीतं शुद्धपात्रोपरिस्थितम् ।
क्र[2]व्यादांशं परित्यज्य वीक्षणादिविशोधितम् ॥ ९ ॥
औदर्यं बैन्दवं भौतमेकीकृत्यानलत्रयम् ।
विन्यस्य वह्निचैतन्यं वह्निबीजेन देशिकः ॥ १० ॥

ओं हूं वह्निचैतन्याय नमः ।

संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम् ।
रक्षितं हेतिमन्त्रेण कवचेनावकुण्ठितम् ॥ ११ ॥
पूजितं त्रिः परिभ्राम्य कुण्डस्योर्ध्वं प्रदक्षिणम् ।
शि[3]वबीजमिति ध्यात्वा वागीशीगर्भगोचरे ॥ १२ ॥
वागीश्वरेण देवेन क्षिप्यमाणं विभावयेत् ।
भूमिष्ठजानुको मन्त्री हृदात्मसंमुखं क्षिपेत् ॥ १३ ॥

### वह्निविन्यासानन्तरकरणीयविधिः ।

ततोन्तास्स्थितबीजस्य नाभिदेशे स[4]मूहनम् ।
सं[5]वृतिं परि[6]धानस्य शौचमाचमनं हृदा[7] ॥ १४ ॥

---

१. सदाश्रयेति अरणिसूर्यकान्तद्विजगृहादेरित्यर्थः । २. क्रव्यादांशमिति अस्त्रेण नैऋते इति शेषः । ३. शिवबीजमिति । परमेश्वरशुक्रमित्यर्थः । ४. समूहनमिति । नाभिदेशेऽग्नौ निक्षिप्ते सति परितो व्यस्तं तं एकत्र पुंजीकृत्येति भावः । ५. संवृतिमाच्छादनम् । ६. परिधानस्य वस्त्रस्य । ७. हृदेति जलबिन्दुनेति शेषः ।

गर्भाग्नेः पूजनं[1] कृत्वा तद्रक्षार्थं शराणुना ।
बध्नीयाद्दर्भजं देव्याः कङ्कणं पाणिपल्लवे ॥ १५ ॥

गर्भाधानादिसंस्कारविधिः ।

गर्भाधानाय संपूज्य सद्योजातेन पावकम् ।
ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम्[2] ॥ १६ ॥
पुंसवनाय वामेन तृतीये मासि पूजयेत् ।
आहुतित्रितयं दद्यात् शिरसाम्बुकणान्वितम् ॥ १७ ॥
सीमन्तोन्नयने षष्ठे मासि सम्पूज्य रूपिणा ।
जुहुयादाहुतीस्तिस्रः शिखया शिखयैव तु ॥ १८ ॥
वक्राङ्गकल्पनां कुर्यात्

जननानन्तरकरणीयविधिः ।

वक्रोद्धाटननिष्कृती[3][4] ।
जातकर्म नृवर्मभ्यां दशमे मासि पूजयेत् ॥ १९ ॥
वह्निं सन्धुक्ष्य दर्भाद्यैः स्नानं गर्भमलापहम् ।
सुवर्णबन्धनं देव्याः कृतं ध्यात्वा हृदार्चयेत् ॥ २० ॥
सद्यस्सूतकनाशाय प्रोक्षयेदस्त्रवारिणा ।
कुण्डं तु बहिरस्त्रेण ताडयेद्वर्मणोक्षयेत् ॥ २१ ॥

---

१. पूजनंकृत्वेति ह्रां ह्रूं गर्भाग्नये नमः इति मन्त्रेणेति शेषः । २. आहुतित्रयमिति तिलैरिति शेषः । ३. वक्रोद्धाटननिष्कृतीति वक्रोद्धाटनं आस्यरन्ध्रोद्भेदनमित्यर्थः । ४. निष्कृतिः वक्रशोधनमिति भावः ।

अस्त्रेणोत्तरपूर्वाग्रान् मेखलासु बहिः कुशान् ।
आस्तीर्य स्थापयेत्तेषु हृदा परिधिविष्टरान् ॥ २२ ॥

वक्त्राणामस्त्रमन्त्रेण ततो लालापनुत्तये ।
समिधः पञ्च होतव्याः प्रान्तमूले घृतप्लुताः ॥ २३ ॥

अग्निशिशुरक्षणप्रकारः ।

ब्रह्माणं शङ्करं विष्णुमनन्तं च हृदार्चयेत् ।
पूर्वाद्युत्तरपर्यन्तं परिधिस्थाननुक्रमात् ॥ २४ ॥

इन्द्रादीश्वरपर्यन्तान् विष्टरस्थाननुक्रमात् ।
अग्नेरभिमुखीभूतान् निजदिक्षु हृदार्चयेत् ॥ २५ ॥

निवार्य विघ्नसङ्घातं बालकं पालयिष्यथ ।
शैवीमाज्ञामिमां तेषां श्रावयेत्तदनन्तरम् ॥ २६ ॥

स्रुक्स्रुवसंस्कारः ।

गृहीत्वा स्रुक्स्रुवावूर्ध्ववदनाधोमुखौ क्रमात् ।
प्रताप्याग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ॥२७॥

कुशस्पृष्टप्रदेशेषु आत्मविद्याशिवात्मकम् ।
क्रमात्तत्त्वत्रयं न्यस्य हां हीं हूं शम्बरैः क्रमात् ॥२८॥

स्रुचि शक्तिं स्रुवे शम्भुं विन्यस्य हृदयाणुना ।
त्रिसूत्र्याऽऽवेष्टितग्रीवौ पूजितौ कुसुमादिभिः ॥ २९ ॥

कुशानामुपरिष्टाच्चौ स्थापयित्वा[1] स्वदक्षिणे ।

आज्यसंस्कारः ।

गव्यमाज्यं समादाय वीक्षणादिविशोधितम् ॥ ३० ॥

स्वैकां[2] ब्रह्ममयीं मूर्तिं सञ्चिन्त्याऽऽदाय तद्घृतम् ।
कुण्डस्योर्ध्वं त्रिधाऽऽवर्त्य[3] तापयित्वाऽग्निगोचरे[4] ॥ ३१ ॥

पुनर्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ।
धृत्वा[5]ऽऽदाय कुशाग्रेण स्वाहान्तशिरसा[6]णुना ॥ ३२ ॥

जुहुयाद्विष्णवे बिन्दुं रुद्ररूपमनन्तरम् ।
भावयेन्निजमात्मानं नाभौ[7] धृत्वोत्प्लवेत्ततः ॥ ३३ ॥

प्रादेश[8]मात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ।
धृताभ्यां संमुखं वह्नेरग्रेणोत्प्लवं[9]माचरेत् ॥ ३४ ॥

---

१. स्थापयित्वेति अधोमुखाविति शेषः । २. स्वकामिति स्वकां मूर्तिं ब्रह्ममयीं सञ्चिन्त्येत्यन्वयः । ३. आवर्त्येति परिभ्राम्येत्यर्थः । अयं पर्यग्निकरणाख्यस्संस्कारः । ४. अग्निगोचरे इति आग्नेय्यां स्थापयित्वा दर्भाग्रेण घृतबिन्दुमादाय ओं हां ब्रह्मणे स्वाहेति जुहुयादिति शेषः । ५. धृत्वेति स्थापयित्वेत्यर्थः । ६. स्वाहान्तशिरसेति ओं ह्रीं विष्णवे स्वाहेति मन्त्रेणेत्यर्थः । ७. नाभौ धृत्वेति ओं हूं रुद्राय स्वाहेति जुहुयादिति शेषः । ८. प्रादेशेति मध्यग्रन्थियुताभ्यां इति शेषः । ९. उत्प्लवमिति सूक्ष्मरूपाणां विघ्नानामूर्ध्वगमनमुत्प्लवः । तेषामेव सर्वेषामधोगमनं संप्लवः ।

हृदात्मसंमुखं तद्वत् कुर्यात्संप्लवनं ततः ।
हृदा[1]लब्धं दग्धदर्भं शस्त्र[2]क्षेपात्पवित्रयेत् ॥ ३५ ॥
दीप्तेनापरदर्भेण नीराज्यान्येन दीपयेत् ।
अस्त्रमन्त्रेण निर्दग्धं वह्नौ दर्भं पुनः क्षिपेत् ॥ ३६ ॥
क्षिप्त्वा घृते कृतग्रन्थिं कुशं प्रादेशसम्मितम् ।
पक्ष[3]द्वयमिडा[4]दीनां त्रयं चाऽऽज्ये विभावयेत् ॥ ३७ ॥
क्रमाद्भागत्रयादाज्यं स्रुवेणाऽऽदाय होमयेत् ।
स्वेत्यग्नौ हेति तद्भा[5]गे शेषमाज्यं क्षिपेत्क्रमात् ॥ ३८ ॥
ओं हां अग्नये स्वाहा ।
ओं हां सोमाय स्वाहा ।
ओं हां अग्नीषोमाभ्यां स्वाहा ।
उद्घाटनाय नेत्राणामग्नेर्नेत्रत्रये मुखे ।
स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् ॥ ३९ ॥
ओं हामग्नये स्विष्टकृते स्वाहा ।
अभिमन्त्र्य षडङ्गेन रेचयेद्धेनुमुद्रया ।
अवकुण्ठ्य तनुत्रेण रक्षेदाज्यं शराणुना ॥ ४० ॥

---

१. हृदालब्धमिति । हृदयाभिमन्त्रितमित्यर्थः । २. शस्त्रक्षेपादिति अस्त्रेण घृते निक्षेपणेनेति भावः । ३. पक्षद्वयमिति । स्वदक्षिणवामक्रमेण शुक्लकृष्णाख्यपक्षद्वयमित्यर्थः । ४. इडादीनामिति दक्षिणवामक्रममध्यभागेषु पिङ्गलेडासुषुम्नानाडीनामित्यर्थः । ५. तद्भागे इति तत्तदाज्यभागेष्वित्यर्थः ।

हृदाज्यबिन्दुविक्षेपात् कुर्यादन्याज्यशोधनम् ।

अग्नेर्वक्त्राभिघारादिविधिः।

वक्त्राभिघारसन्धानं[1] वक्त्रैकीकरणं मतम् ॥ ४१ ॥

ओं हं सद्योजाताय स्वाहा ।

ओं हिं वामदेवाय स्वाहा ।

ओं हुं अघोराय स्वाहा ।

ओं हें तत्पुरुषाय स्वाहा ।

ओं हों ईशानाय स्वाहा ।

इति एकैकया घृताहुत्याभिघारः ।

ओं हं हिं सद्योजातवामदेवाभ्यां स्वाहा ।

ओं हिं हुं वामदेवाऽऽघोराभ्यां स्वाहा ।

ओं हुं हें अघोरतत्पुरुषाभ्यां स्वाहा ।

ओं हें हों तत्पुरुषेशानाभ्यां स्वाहा ।

इतीष्टवक्त्रे वक्त्राणामन्तर्भावैकीकरणम् ।

ओं हं हिं हुं हें हों सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यस्स्वाहा । इत्यग्निकोणात् वायुकोणान्तं निर्ऋतिकोणादीशानान्तमाज्यधारां पातयेत् ।

---

१. वक्त्राभिघारः वक्त्रदीपनमिति भावः ।

अथवा कुण्डमानत्वं यदिष्ट[1]वदने स्मरेत् ।
अन्तर्भाव्यान्यवक्त्राणि तदेकीकरणं मतम् ॥ ४२ ॥

अग्नेर्नामकरणविधिः ।

ईशेन वह्निमभ्यर्च्य दत्वाऽस्त्रेणाऽऽहुतित्रयम् ।
कुर्यात्सर्वात्मना नाम शिवाग्निस्त्वं हुताशन ॥ ४३ ॥

वागीश्वरीवागीश्वरविसर्जनादिविधिः ।

हृदार्चितौ विसृज्याग्नेः पितरौ [2]विधिपूरणीम् ।
मूलेन वौषडन्तेन दद्यात्पूर्णां यथाविधि ॥ ४४ ॥

शिवयजनपूर्वकहोमविधिः ।

ततो [3]हृदम्बुजे साङ्गं सासनं भास्वरं परम् ।
यजेत्पूर्ववदावाह्य [4]प्रार्थ्याज्ञां तर्पयेच्छिवम् ॥ ४५ ॥
यागाग्निशिवयोः कृत्वा नाडीसन्धानमात्मनः ।
शक्त्या मूलाणुना होमं कुर्यादङ्गैर्दशांशतः ॥ ४६ ॥

होमद्रव्यमानाविधिः ।

घृतस्य [5]कार्षको होमः क्षीरस्य मधुनस्तथा ।
[6]शुक्तिमात्राहुतिर्दध्नः [7]प्रसृतिः पायसस्य तु ॥ ४७ ॥

---

१. इष्टेति ईशाने मूर्तये होमः पुरुषेत्वाणिमादिकम् । प्रायश्चित्तादिकं घोरे तथा स्यात्क्रूरकर्म च । इत्युक्तेः कर्मानुगुण्येन वक्त्रैक्यं कल्पयेत् । प्रकृते ईशानवक्त्रे इति बोध्यम् । २. विधिपूरणीमिति निष्कामणादिविधेः पूर्तिकरीम् । ३. हृदम्बुजे इति अग्नेरिति शेषः । ४. प्रार्थ्याज्ञामिति अग्ने त्वमैश्वरं तेजः इति प्रकारेणेत्यर्थः । ५. कार्षकः पलस्य तुर्यांशः । ६. शुक्तीति अङ्गुळीभिस्समुद्धृता शुक्तिः । ७. प्रसृतिः प्रसृताङ्गुळिः पाणिः ।

पथ्यवत्सर्वभक्ष्याणां लाजानां मुष्टिसम्मितम् ।
खण्डत्रयं तु मूलानां फलानां स्वप्रमाणतः ॥ ४८ ॥
ग्रासार्धमात्रमन्नानां पञ्च सूक्ष्माणि होमयेत् ।
इक्षोरापर्वकं मानं लतानामङ्गुळद्वयम् ॥ ४९ ॥
पुष्पं पत्रं स्वमानेन समिधस्तु दशाङ्गुलाः ।
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ॥ ५० ॥
काषायसम्मितानेतान् गुग्गुलुं बदरास्थिवत् ।
कन्दानामष्टमं भागं जुहुयाद्विधिना परम् ॥ ५१ ॥
होमं निर्वर्तयेदेवं ब्रह्म[1]बीजपदैस्ततः ।

पूर्णाहुतिप्रकारः ।

घृतेन स्रुचि पूर्णेतु निधायाधोमुखं स्रुवम् ॥ ५२ ॥
स्रुगग्रे पुष्पमारोप्य पश्चा[2]द्वामेन पाणिना ।
पुरस्सव्येन तौ[3] धृत्वा शङ्खसन्निभमुद्रया ॥ ५३ ॥
समुद्गतोर्ध्वकायश्च समपादस्समुत्थितः ।
नाभौ तन्मूलमाधाय स्रुगग्रव्यग्रलोचनः ॥ ५४ ॥

---

१. ब्रह्मबीजपदैरिति ब्रह्मणामीशानादीनां प्रयोगे पूर्वं प्रणवमुच्चार्य अनन्तरं तत्तद्बीजमुच्चार्य पश्चादीशानमूर्धायेत्यादिव्योमव्यापिपद-मध्यपठितमन्त्रानुच्चार्य होमयेदिति भावः । २. पश्चादिति स्रुक्स्रुवयोः पश्चाद्भागे इत्यर्थः । ३. तौ स्रुक्स्रुवावित्यर्थः ।

ब्रह्मादिकारणत्यागाद्धिनिस्सृत्य सुषुम्नया ।
वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः ॥ ५५ ॥
मूलमन्त्रमतिस्पष्टं वौषडन्तं समुच्चरन् ।
तदग्नौ जुहुयादाज्यं यत्रसंयुतधारया ॥ ५६ ॥
आचामं चन्दनं दत्वा ताम्बूलप्रभृतीनपि ।
भक्त्या तद्भूतिमावर्त्य विदध्यात्प्रणतिं पराम् ॥ ५७ ॥

वह्निस्थशिवविसर्जनविधिः ।

ततो वह्निं[1] समभ्यर्च्य[2] (हुं)फडन्तास्त्रेण शम्बरान् ।
संहारमुद्रयाऽऽहृत्य क्षमस्वेत्यभिधाय च ॥ ५८ ॥
भास्वरान् परिधिस्थांश्च[3] पूरकेण हृदाणुना ।
शुद्धया परयाऽऽत्मीये स्थापयेद्धृदयाम्बुजे ॥ ५९ ॥

अन्तर्बलिविधिः ।

सर्वपाकाग्रमादाय कृत्वा मण्डलकद्वयम् ।
अन्तर्बहिर्बलिं[4] दद्यादाग्नेय्यां कुण्डसन्निधौ ॥ ६० ॥
ओं हां रुद्रेभ्यस्स्वाहा[5] पूर्वे ।
ओं हां मातृभ्यस्स्वाहा दक्षिणे ।
ओं हां गणेभ्यस्स्वाहा पश्चिमे ।

---

१. वह्निं वह्निस्थं शिवम् । २. समभ्यर्च्य अष्टपुष्पं दत्वा । ३. परिधिस्थांश्चेति अत्र चकारात् विष्टरस्थांश्चेत्यपि समुच्चीयते । ४. बहिर्बलिमिति आत्मार्थे बाहिर्बलिं नानुमेने शैवभूषणकारः । ५. पद्धत्यन्तरेषु नमोन्तं विद्यते ।

ओं ह्रां यक्षेभ्यस्स्वाहा उत्तरे ।
ओं ह्रां गृहेभ्यस्स्वाहा ईशाने ।
ओं ह्रां असुरेभ्यस्स्वाहा आग्नेये ।
ओं ह्रां राक्षसेभ्यस्स्वाहा नैर्ऋते ।
ओं ह्रां नागेभ्यस्स्वाहा वायव्ये ।
ओं ह्रां नक्षत्रेभ्यस्स्वाहा मण्डलमध्ये ईशाने ।
ओं ह्रां राशिभ्यस्स्वाहा वह्नौ
ओं ह्रां विश्वेभ्यस्स्वाहा नैर्ऋत्याम् ।
ओं ह्रां क्षेत्रपालाय स्वाहा वरुणानिलयोर्मध्ये ।

इत्यन्तर्बलिविधानं सम्पूर्णम् ।

———:o:———

## बहिर्बलिविधिः ।

अथ द्वितीयमण्डले ओं ह्रां इन्द्राय स्वाहा ।
ओं ह्रां अग्नये स्वाहा ।
ओं ह्रां यमाय स्वाहा ।
ओं ह्रां निर्ऋतये स्वाहा ।
ओं ह्रां वरुणाय स्वाहा ।
ओं ह्रां वायवे स्वाहा ।
ओं ह्रां सोमाय स्वाहा ।

ओं हां ईशानाय स्वाहा ।

इति पूर्वादीशान्तदिक्षु । ओं हां ब्रह्मणे स्वाहा एवमूर्ध्वभागमुद्दिश्य ऐशान्यां । ओं हां विष्णवे स्वाहा अधोभागमुद्दिश्य नैर्ऋते । ओं हां क्षेत्रपालाय स्वाहा तयोर्मध्ये। ततो मण्डलाद्बहिः ओं हां वायसादिभ्यस्समयभेदिभ्यस्स्वाहा इति बहिर्बलिविधानम् । यागमण्डपाद्बाहिर्बलिर्देयः । ततो बलिद्वयमन्त्रान् संहारमुद्रयाहृत्याऽऽत्मनि निवेशयेत् ।

—— :o: ——

### लीलावत्यग्निकार्यविधिः ।

अथ संक्षेपतो दृष्टं लीलावत्यां शिवाऽऽगमे ।
कुण्डे वा स्थण्डिले वाऽपि वह्निकार्यं तदुच्यते ॥६१॥

चक्षुषा न्यस्तमूलेन वीक्ष्य प्रोक्ष्य शराणुना ।
हुम्फडन्तेन सन्ताड्य क्रव्यादांशं परित्यजेत् ॥ ६२ ॥

अभ्युक्ष्य वर्मणा मूर्त्या कुण्डे वह्निं नियोजयेत् ।
ओं हां हं हां वह्निमूर्तये नमः ।
संहारमुद्रयाऽनेन[1] बिन्दौ[2] वह्निं निवेशयेत् ॥ ६३ ॥

---

१. संहारमुद्रयेति आदायेति शेषः । २. बिन्दौ बैन्दवाग्नौ ।

पूरकेण ततो नाभौ विश्राम्योद्भवमुद्रया ।
रेचकेण प्रयोगेण
ओं हां हूं हां वह्निमूर्तये नमः ।
आग्नेयममुना बीजं प्रदीपकलिकोपमम् ॥ ६४ ॥
कुण्डस्थे पावके न्यस्य पञ्च ब्रह्माणि पूजयेत् ।
आहुतीः पञ्च मूलेन जुहुयात्तदनन्तरम् ॥ ६५ ॥
ध्रुवाऽऽद्येन[1] हृदानाम शिवाग्निस्त्वमिति (वि)न्यसेत् ।
ब्रह्माणं शङ्करं विष्णु मनन्तं च हृदार्चयेत् ॥ ६६ ॥
पूर्वाद्युत्तरपर्यन्तं दिक्षु कुण्डाद्बहिः क्रमात् ।
तदन्वाधारशक्त्यादि शिवमभ्यर्च्य पूर्ववत् ॥ ६७ ॥
जुहुयान्मूलमन्त्रेण शक्त्याङ्गैश्च दशांशतः ।
शिवं विसृज्य भूरादित्रयं च प्रणवान्वितम् ॥ ६८ ॥
क्रमेण यौगपद्येन दत्वाहुतिचतुष्टयम्[2] ।
ओं हां हूं हृदयायेति पठित्वा मनसा युतम् ॥ ६९ ॥
वह्निं च विसृजेदेवमिति लीलावतीमतम् ।
ततश्शिवान्तिकं गत्वा पूजाहोमादिकर्म च ॥ ७० ॥
गृहाण भगवन् पुण्यफलमित्यभिधाय च ।
अर्घ्योदकेन देवाय मुद्रयोद्भवसंज्ञया ॥ ७१ ॥

---

१. ध्रुवाऽऽद्येन प्रणवाद्येन । २. दत्वाहुतिचतुष्टयमिति । ओं भूस्स्वाहा, ओं भुवस्स्वाहा, ओं स्वस्स्वाहा, ओं भूर्भुवस्स्व स्स्वाहेति क्रमेणेत्यर्थः ।

हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ।
ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च ॥ ७२ ॥
अर्घ्यं पराङ्मुखं दत्वा क्षमस्वेत्यभिधाय च ।
नाराचमुद्रयाऽस्त्रेण फडन्तेनाणुसञ्चयम् ॥ ७३ ॥
संहृत्य दिव्यया लिङ्गे मूर्तिमन्त्रेण योजयेत् ।
स्थण्डिलेत्वर्चिते देवे मन्त्रसङ्घातमात्मनि ॥७४-२७३॥
नियोज्य विधिनोक्तेन विदध्याच्चण्डपूजनम् ।

## अथ चण्डपूजा ।

गोमयालिप्तभूभागे यद्वा पीठेम्बरावृते ॥ १ ॥
अर्चयेद्दिशि भर्गस्य यथा चण्डं तदुच्यते ।
ओं चण्डासनाय नमः ओं चण्डमूर्तये[1] नमः ।
ओं ध्वनिचण्डेश्वराय हुंफट् स्वाहा । इत्यनेनाऽऽवाह्य ओं चण्डहृदयाय हुंफण्णमः । ओं चण्डशिरसे हुंफण्णमः । ओं चण्डशिखायै हुंफण्णमः । ओं चण्डकवचाय हुंफण्णमः । ओं चण्डने(त्राय)त्रेभ्यो हुंफण्णमः । ओं चण्डास्त्राय हुंफण्णमः । इति हस्ते अस्त्रमिति सकळीकृत्य ध्यायेत् ।
रुद्राग्निप्रभवं[2] चण्डं कज्जलाभं भयानकम् ॥ २ ॥

---

१. चण्डमूर्तये नम इति । एतदनन्तरं चण्डध्यानं नेत्राविन्यसनं च क्रियाक्रमद्योतिकायामुक्तम् । २. रुद्राग्निप्रभवमिति रुद्रकोपसमुद्भूतमित्यर्थः ।

शूलटङ्कधरं रौद्रं चतुर्वक्त्रं चतुर्भुजम् ।
मुखोद्गीर्णमहाज्वालं रक्तद्वादशलोचनम् ॥ ३ ॥
जटामकुटखण्डेन्दुमण्डितं फणिकङ्कणम् ।
व्यालयज्ञोपवीतं च साक्षसूत्रकमण्डलुम् ॥ ४ ॥
श्वेतपद्मासनासीनं भक्तिप्रह्वार्तिनाशनम् ।
मण्डले चन्द्रखण्डाभे टङ्काकारेऽथवार्चयेत् ॥ ५ ॥
यथाशक्ति जपं कुर्यादङ्गानां च दशांशतः ।
गोभूहिरण्यवस्त्राणि मणिहेमादिभूषणम् ॥ ६ ॥
विहाय शेषनिर्माल्यं चण्डेशाय निवेदयेत् ।

ओं ध्वनिचण्डेश्वराय हुंफट्स्वाहा। इति मूलमन्त्रेण। तदुक्तम् ।

लेह्यशोष्यान्नपानादि ताम्बूलं स्रग्विलेपनम् ॥ ७ ॥
निर्माल्यभोजनं तुभ्यं प्रदत्तं तु शिवाज्ञया ।
सर्वमेतत्क्रियाकाण्डं मया चण्ड तवाऽऽज्ञया ॥ ८ ॥
न्यूनाधिकं कृतं मोहात् परिपूर्णं तदस्तु मे ।
इति विज्ञाप्य चण्डेशं दत्त्वार्घ्यं[1] तस्य शम्बरात् ॥९॥

---

१. दत्त्वार्घ्यमिति पराङ्मुखार्घ्यं दत्त्वेत्यर्थः ।

संहरेन्मूर्तिमन्त्रेण शनैस्संहारमुद्रया ।
ओं घण्डमूर्तये नमः ।
पूरकान्वितमूलेन मन्त्रानात्मनि योजयेत् ॥ १० ॥
निर्माल्यापनयस्थानं लिम्पेद्गोमयवारिणा ।
प्रोक्ष्यास्त्रवारिणा स्थानं विसृज्यार्घ्यं करादिकम्
॥ ११–२८४ ॥
प्रक्षाळ्य सम्यगाचम्य न्यासं कुर्याद्यथोदितम् ।

कपिलापूजा ।

ओं कपिले नन्दे नमः । ओं कपिले भद्रे नमः ।
ओं कपिले सुशीले नमः । ओं कपिले सुरभे नमः ।
ओं कपिले सुमनसे नमः ।
सौरभेयि जगन्मातः देवानाममृतप्रदे ॥ १ ॥
ग्रहाण वरदे ग्रासमीप्सितार्थं च देहि मे ।
वन्दिताऽसि वसिष्ठेन विश्वामित्रेण जह्नुना ॥ २ ॥
कपिले हर मे पापं यन्मया दुष्कृतं कृतम् ।
गावो ममाग्रतो नित्यं गावः पृष्ठत एव मे ॥ ३ ॥
गावो मे हृदये वाचि गवां मध्ये वसाम्यहम् ।
एतन्नरो जपेन्मन्त्रं त्रिसन्ध्यं नियतश्शुचिः ॥ ४ ॥
विमुक्तस्सर्वपापेभ्यश्शिवलोकं स गच्छति ।
अथवा ।
अमृतोन्मथनोत्पन्ने सुरभे लोकधारिणि ॥ ५ ॥

इमं ग्रासं ग्रहाण त्वमिदम्मे व्रतमुत्तमम् ।
गवां ग्रासो यथा देय स्सौरभेयाय[1] चैव तु ॥ ६ ॥

तुल्यमेतत्फलं दृष्टं किन्तु मन्त्रः पृथक् पृथक् ।
सर्वलोकधराह्येते जीवितान्नप्रदायिनः ॥ ७ ॥

ग्रासं गृह्णन्तु हृष्टास्ते ह्येतन्मे व्रतमुत्तमम् ।
नित्यं परगवे दद्यात् गृहीत्वा दुर्लभं व्रतम् ॥ ८ ॥

रक्षन्ति च भयाद्धोरात् स्पर्शने पापनाशनम् ।

विद्यागुरुपूजा ।

अथ विद्यां[2] समभ्यर्च्य पुष्पधूपस्रगादिभिः ॥ ९ ॥

सम्यक् सम्पूजयेद्भक्त्या गुरोश्चरणपङ्कजे ।
मध्याह्नसमयं यावत् कृत्वा स्वाध्यायमीप्सितम्
॥ १०-२९४ ॥

माध्याह्निकविधिः ।

अर्चयेत्परमेशानं (कृत)कृत्वा स्नानादि पूर्ववत् ।
पूर्वार्चिते तथा देवे प्रदद्यादष्टपुष्पिकाम् ॥ १ ॥

पीठमूर्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ।

भोजनालयकर्तव्यविधिः ।

विधिं माध्याह्निकं कृत्वा रम्ये भोजनमन्दिरे ॥ २ ॥

---

१. सौरभेयाय सुरभेरपत्याय । २. विद्यां संज्ञायां समजेति सूत्रेण क्यपि । ज्ञानसाधनमित्यमुमर्थमवबोधयति विद्याशब्दः ।

विविक्ते गोमयालिप्ते विशुद्धं पाकमानयेत् ।
ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥ ३ ॥
जप्तैस्सदर्भहस्तस्थैः सिञ्चेत्तं वारिबिन्दुभिः ।
सर्वपाकाग्र्यमुद्धृत्य शिवायार्धं निवेदयेत् ॥ ४–२९८ ॥
अन्यार्धं चुल्लिकाहोमविधानायोपकल्पयेत् ।

चुल्लीहोमविधिः ।

विशोध्य विधिना[1] चुल्लीं तद्वह्निं पूरकाहृतम् ॥ १ ॥
कृत्वा[2] नाभ्यग्निना[3] चैक्यं ततो रेचकवायुना ।
वह्निबीजं समास्थाय कादिस्थानगतिक्रमात् ॥ २ ॥
शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् ।

ओं हां अग्नये नमः । ओं हां सोमाय नमः । ओं हां सूर्याय नमः । ओं हां बृहस्पतये नमः । ओं हां प्रजापतये नमः । ओं हां सर्वेभ्यो देवेभ्यो नमः । ओं हां सर्वेभ्यो विश्वेभ्यो नमः । ओं हां अग्नये स्विष्टकृते नमः ।

अग्न्यादिपूर्वपर्यन्तं पूजयित्वाऽनले क्रमात् ॥ ३ ॥
स्वाहान्तमाहुतीर्दत्वा[4] क्षमयित्वा विसर्जयेत् ॥ ३½-३०१ ॥

---

१. विधिनेति चतुस्संस्कारैरित्यर्थः । २. कृत्वेति कुम्भकेनेति शेषः । ३. नाभ्यग्निनाचेति । चाद्बैन्दवाग्निनाचेत्यर्थः । ४. स्वाहान्तमाहुतीः इति अन्नाहुतीरिति शेषः ।

वास्तुबलिविधिः ।

ओं ह्रां धर्माय नमः । इति चुल्ल्यां दक्षिणबाहौ ।

ओं ह्रां अधर्माय नमः इति चुल्ल्यां वामबाहौ ।

ओं ह्रां स(रस)दनपरिवर्तनाय नमः इति काञ्जिन्यादिसन्धानभाण्डेषु । ओं ह्रां जलाश्रिताय[1] वरुणाय नम इति जलभाण्डेषु । ओं ह्रां महाविघ्नराजाय नमः इति गृहप्रधानद्वारे । ओं ह्रां सुभगे नम इति पेषिण्याम् । ओं ह्रां रौद्रकोटीरकाय नमः इति उलूखले । ओं ह्रां बलभद्रप्रियाय प्रहरणाय नम इति मुसले । ओं ह्रां मृत्यवे देवचोदिताय नम इति सम्मार्जिन्याम् । ओं ह्रां कामाय कुसुमायुधाय नम इति शयनीयशिरसि । ओं ह्रां स्कन्दाय गृहाधिपतये नमः इति मध्यस्तम्भस्याऽधस्तात् । इति वास्तुबलिं निर्वृत्य ।

सांतानिकभिक्षाभोजनविधिः ।

धौतपादस्समाचान्तः स्थानमासाद्य पूर्वकम् ॥ १ ॥

शिवभक्तैस्सदाचारैश्शुद्धशैवैस्तपोधनैः ।

परस्परमसङ्कीर्णैरुत्कृष्टैरप्यनाकुलैः ॥ २ ॥

सवर्णैरेकया पङ्क्त्या भुञ्जीताऽऽन्तर्मना[2] मुनिः ।

सौवर्णे राजते ताम्रे लोहपात्रे सुसंस्कृते ॥ ३ ॥

---

१. जलाश्रयायेति सुवचम् । २. अन्तर्मनाः तदेकचित्तः ।

आचार्यस्साधकः पुत्रः समयी च यथाक्रमम् ।
अग्रे परिष्कृतिं कृत्वा परितो भस्मरेखया ॥ ४ ॥
चतुर्दिगाननो[1] मौनी पात्राभावे तु ताम्रजे ।
साधारणे[2]ऽथवा कांस्ये सप्तधा भस्मशोधिते ॥ ५ ॥
मन्त्रिते बहुरूपेण पात्रे भुञ्जीत भोजनम् ।
पलाशपद्मिनीचूतमधूककदळीदळैः ॥ ६ ॥
अन्यैश्चानिन्दितैः पत्रैः भोक्तव्यं तुल्यजातिभिः ।
वटाश्वत्थार्कवातारि[3]सर्ज[4]भल्लातको[5]द्भवैः ॥ ७ ॥
एवमादिभिरन्यैश्च निषिद्धैर्नाद्यते दळैः ।
जानुमध्यकरो मन्त्री बद्धवीरासनोऽथवा ॥ ८ ॥
लग्नवामकरः पात्रे पूर्ववन्मन्त्रितोदनः ।
औदर्यं ज्वलितं ध्यात्वा हेतिमन्त्रेण पावकम् ॥ ९ ॥
अन्नं पवित्रमश्नीयात् सूपयुक्तं घृतप्लुतम् ।
आपोशनं पुरा दत्वा प्राणाद्यैः प्रणवान्वितैः ॥ १० ॥
स्वाहान्तैराहुतीः पञ्च दत्वोद्दीप्योदरानलम् ।

तद्यथा नागकूर्मकृकरदेवदत्तधनञ्जयेभ्य उपप्राणवायु-

---

१. चतुर्दिगानन इति आचार्यसाधकपुत्रसमयिक्रमेणेत्यर्थः ।
२. साधारणे इति ताम्रजे इत्यनेनान्वयः । ३. वातादिः एरण्डः ।
४. सर्जः सालः । ५. भल्लातकश्चम्पकः ।

भ्यस्स्वाहेत्यापोशनजलेन भक्तादिकं निवेद्य शेषजलममृतोपस्तरणमसीत्यनेन मन्त्रेण प्राश्य ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं व्यानाय स्वाहा, ओं उदानाय स्वाहा, ओं समानाय स्वाहा इति प्राणाहुतीर्दत्वा विधिना भुक्त्वा ओं अमृतापिधानमसीति मन्त्रेणाप्रक्षाळितहस्तेन चुळुकं गृहीत्वा आचामेत् । इति ।

ग्रासैः परिमितैर्भागं भागं तोयेन पूरयेत् ॥ ११ ॥

प्राणसञ्चारणायांशमुदरस्य न पूरयेत् ।
कतकं मधुशिग्रू[1] च पलाण्डुं लाशुनामिषे ॥ १२ ॥

व्यञ्जनं[2] हस्तदत्तं च लवणं परिवर्जयेत् ।
आददीत प्रभुञ्जानो लवणं च न वा घृतम् ॥ १३ ॥

मूर्धापिधान[3]मौत्कट्यं कुत्सनं जृम्भणं[4] त्यजेत् ।
नान्नस्योर्ध्वं पिबेद्वारि न प्रक्षाळितपाणिना ॥ १४ ॥

न विस्तारितवक्त्रेण नचादौ नान्यचेतसा ।
मक्षिकानखकेशादिदुष्टं त्यक्त्वाल्पमोदनम् ॥ १५ ॥

---

१. शिग्रुः श्वेतनाळः । २. कुञ्जनमिति व्याख्यानपाठे रक्तनाळमित्यर्थो बोध्यः । ३. मूर्धापिधानं मस्तकाच्छादनमित्यर्थः । ४. जृम्भणं गात्रमोटनमित्यर्थः ।

शेषं क्षाळितहस्तेन भुञ्जीत स्पृष्टभस्मना ।
अद्भिर्यथावदाचम्याङ्गुष्ठं पादस्य दक्षिणम्[1] ॥ १६ ॥

सिञ्चेद्दक्षिणमुष्टिस्थादङ्गुष्ठाग्राच्च्युताम्भसा ।
आत्मा वै दक्षिणे पादे परात्परतरो विभुः ॥ १७ ॥

तमहमभिषिञ्चामि योऽङ्गुष्ठाग्रे व्यवस्थितः ।
पूर्ववत्सकळीकृत्य भुक्तदोषनिवृत्तये ॥ १८ ॥

मुद्रामानाभिनासान्तं बध्नीयात्परिखाह्वयाम्
॥ १८½-२१९ ॥

२ इति सांतानिकभिक्षाभोजनविधिः ।

——:o:——

अयाचितभिक्षाचरणविधिः ।

आनीयाऽयाचमानाय श्रद्धया यत्प्रदीयते ।
अन्नादिभूसिपर्यन्तं सा भिक्षा स्यादयाचिता ॥ १ ॥

पतितान्नापितात्कारोरभिशस्तात्तथा त्यजेत् ।
धर्मोन्निनीषया भिक्षां भिक्षुरभ्याददीत ताम् ॥ २ ॥

---

१. अङ्गुष्ठं पादस्य दक्षिणं इति । दक्षिणपादाङ्गुष्ठमित्यर्थः ।

२. इति सांतानिकेति सांतानिकाच शिष्यादिसन्तानभवाभिक्षा । यदाहुः "शिष्यादिसन्ततिश्शैवे सन्तानं तन्निवेदितम् । द्रव्यं यद्गुरवे सा हि भिक्षा सान्तानिकी स्मृता" इति ।

यथा मध्वाददानोऽपि भृङ्गः पुष्पं न बाधते ।
तद्वन्माधूकरीं भिक्षामाददीत गृहाधिपात् ॥ ३ ॥
भिक्षार्थं सम्प्रविष्टाय भ्रमते स्वयमेववा ।
उपनीता स्वयं दत्ता या सा स्यान्निष्परिग्रहा ॥ ४ ॥
एतास्सोमवदादेयाः भुक्तिमुक्तिफलार्थिभिः ।
आसां माधूकरी श्रेष्ठा सदैकान्नं तु वर्जयेत् ॥ ५ ॥
माधूकरीं चरेद्वृत्तिमतिम्लेच्छकुलादपि ।
एकान्नं तु न भुञ्जीत बृहस्पतिसमो[1] यतिः ॥ ६ ॥
एताभ्यस्त्वपरां भिक्षां प्रार्थनाद्युपरोधतः ।
साध्यां भिक्षुर्निरोधाख्यामधमां परिवर्जयेत् ॥ ७ ॥
भिक्षार्थं ताम्रजं लोहं ब्रह्मवृक्षादिसम्भवम्[2] ।
बुभुक्षोर्विहितं पात्रं मुमुक्षोः कम्बुकादिजम् ॥ ८ ॥
पवित्रशुक्तिकालम्बिबहुरूपाभिमन्त्रितम् ।
तनुत्रजसकाषायशुचिवस्त्रावकुण्ठितम् ॥ ९ ॥
विशुद्धभस्मना स्नातः कौपीनं चोत्तरीयकम् ।
परिवृत्य[3] समाचम्य मौनी ध्यात्वा शिवं गुरुम् ॥१०॥

---

१. बृहस्पतिकुलादपि इति पाठभेदः । २. ब्रह्मवृक्षादिसम्भवमिति । पलाशरसालप्रभृतिपर्णविरचितपात्रमित्यर्थः । ३. परिवृत्त्येति । पुरा विधृतं कौपीनं उत्तरीयं च विसृज्य धारितकौपीनोत्तरीयान्तर इत्यर्थः ।

9

तयोराज्ञां समादाय दण्डं चास्त्राभिमन्त्रितम् ।
आतपत्रकरो यायाद्भिक्षार्थं शुद्धवेश्मसु[1] ॥ ११ ॥

तदा प्रणामं निष्ठीवं[2] स्पर्शमुन्मार्गसर्पणम्[3][4] ।
कुत्सनं[5] च न कुर्वीत त्यजेच्च श्वादिसङ्कुलम् ॥ १२ ॥

चतुर्णां शुद्धवर्णानां समासाद्य गृहाङ्गणम् ।
भिक्षां देहीति सञ्जल्प्य पादाङ्गुष्ठाग्रलोचनः ॥ १३ ॥

तावत्कालं प्रतीक्षेत यावद्गौर्वत्सयोगतः ।
प्रस्नुचं समवाप्नोति ततोऽन्यत्र वृजेन्मुनिः ॥ १४ ॥

वृजन्नपि समाहूतो नागच्छेत्तत्प्रदेशतः ।
यजमानजनानीतां भिक्षां तत्रैव चाहरेत् ॥ १५ ॥

न दर्व्या न च हस्तेन न कांस्येनाऽऽददीत तां[6] ।
वृषळीर्गुर्विणी[7]म्लानवस्त्राणां च करेण वा ॥ १६ ॥

ततो भिक्षामटित्वेत्थं पात्रपूर्त्यवसानिकाम् ।
लोकानां शुभमाशंसन् वृजेदाश्रममात्मनः ॥१७-३३६॥

---

१. शुद्धवेश्मसु सदाचारवद्गृहेषु इत्यर्थः । २. निष्ठीवं आस्यजलोद्गिरणम् । ३. स्पर्शं यस्य कस्याऽपि स्पर्शम् । ४. उन्मार्गसर्पणं अपथगमनम् । ५. कुत्सनं निन्दा । ६. तां भिक्षामित्यर्थः । ७. गुर्विणी गार्भिणी ।

भिक्षाटनानन्तरकरणीयविधिः ।

भिक्षापात्रं शुचिस्थाने धृत्वा[1]ऽऽचम्य यथा पुरा ।
उद्धूळ्य सकळीकृत्य तां प्रोक्ष्या[2]ऽस्त्रेण दीपयेत् ॥ १ ॥
त्र्यक्षरेणा[3]ऽमृतीकृत्य कुर्याद्भागत्रयं वृती ।
भागं निवेद्य देवाय गुरवे च द्वितीयकम् ॥ २ ॥
तृतीयं प्राणरक्षार्थमुपभुञ्जीत पूर्ववत्[4] ।
सिद्धान्ते भोजनस्यायं विधिः प्रोक्तस्समासतः ॥ ३ ॥

सायन्तनविधिः ।

अथ स्वाध्याययोगेन सन्ध्यामासाद्य पश्चिमाम् ।
स्नानं सन्ध्यार्चनं कृत्वा पूजयित्वा महेश्वरम् ॥ ३ ॥

शयनविधिः ।

विशुद्धभूतले शुद्धे तृणाच्छन्ने मृगत्वचम् ।
शार्दूलचर्मकन्थां वा प्रस्तीर्योपरि विन्यसेत् ॥ ५ ॥
कृतमन्त्रतनुर्मन्त्री हृदम्भोरुहवर्तिनम् ।
चिन्तयन्नक्षरात्मानं[5] शयित्वा योगनिद्रया ॥ ६ ॥

---

१. धृत्वेति निधायेत्यर्थः । २. प्रोक्ष्येति अस्त्रेण प्रोक्ष्येत्यर्थः । ३. त्र्यक्षरेण मृत्युञ्जयमन्त्रेणेत्यर्थः । ४. पूर्ववदिति सांतानिकभिक्षाभोजनप्रकरणोक्तवदित्यर्थः । ५. अक्षरात्मानं एतदर्थनिरूपणं प्रागेव टिप्पण्यां प्रपञ्चितम् ।

### अर्धरात्रविधिः ।

ततो दीपोपनीतेन वस्त्रपूतेन वारिणा ।
सन्ध्यां शिवार्चनं कुर्यात् निशीथेऽपि यथा पुरा ॥७॥

### नित्यविध्युपसंहारः ।

पुनस्सुप्त्वा समुत्थाय प्रातस्सञ्चिन्त्य शङ्करम् ।
यथोद्दिष्टं क्रियाकाण्डं सर्वं प्रत्यहमाचरेत् ॥ ८ ॥

परोपकारशीलेन श्रीमता सोमशम्भुना ।
क्रियाकाण्डक्रमावळ्यां कृतो नित्यविधिक्रमः ॥९-३४५॥

इति श्रीक्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ
नित्यविधिस्सम्पूर्णः ।



|| श्रीः ||

क्रियाकाण्डक्रमावळ्यां नैमित्तिकविधौ

# पवित्रलक्षणाविधिः ।

सर्वपूजाविधिच्छिद्रपूरणाय पवित्रकम् ।
कर्तव्यमन्यथा मन्त्री सिद्धिभ्रंशमवाप्नुयात् ॥ १ ॥

आर्षाढ्यादिचतुर्दश्यामथ श्रावणभाद्रयोः ।
सितासितासु कर्तव्यं चतुर्दश्यष्टमीषु च ॥ २ ॥

एतेषु त्रिषु मासेषु श्रेष्ठमध्याधमक्रमात् ।
शम्भोः पवित्रमुद्दिष्टमन्यथा दोषकारकम् ॥ ३ ॥

आषाढादित्रयेष्वेव सुप्त एव जनार्दने ।
पवित्रं विदधीतैवं शास्त्रेऽसौ नियमस्त्रिधा ॥ ४ ॥

---

१. सर्वपूजेति । नित्यनैमित्तिककाम्यभेदभिन्नानां पवित्रारोपणकालात्पूर्वमनुष्ठितानां साङ्गोपाङ्गानां पूजाविधीनां असम्पूर्णकरणादिलक्षणान्तरायापोहनद्वारा पूरणार्थमिति भावः । २. पवित्रकमिति । पूजावैकल्यतः पुनातीति पवित्रकम् । ३. सिद्धिभ्रंशमिति । भोगमोक्षलक्षणायाः सिद्धेर्भ्रंशमित्यर्थः । ४. आषाढ्यादीति आषाढसम्बन्धिनी आषाढी सैवाऽऽदिचतुर्दशी । ५. अथ श्रावणेति मध्यमकन्यसयोरिति भावः । ६. सितासितासु इति बुभुक्षुः शुक्लपक्षे पवित्रारोपणं कुर्यात् । ७. शास्त्रे मोहसूरोत्तराद्यागमशास्त्रे इति भावः ।

प्रत्यहं[1] तद्विधेयत्वान्नायं नित्यविधिर्मतः ।
पवित्रं कालनैयत्यात्[2] प्रायश्चित्त[3]मिदं[4] नहि ॥ ५ ॥

तस्मान्नियतकालत्वा[5]न्नैमित्तिक[6]मिदं[7] मतम् ।
विघ्नापहारपूर्त्यादि[8] फलमस्योपगीयते ॥ ६ ॥

मोहसूरोत्तरेऽस्माभिर्दृष्टंचेदं शिवागमे ।
तस्मान्नैमित्तिकं नाम पवित्रकमिति स्फुटम् ॥ ७ ॥

नित्यं तु नित्यपूजायां पत्रपुष्पकुशादिभिः ।
पवित्रमन्यकालेऽपि प्रत्यहं परिकल्पयेत् ॥ ८ ॥

वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ।
दुर्गायमेन्द्रगोविन्दस्मरशम्भुसुधाभुजाम् ॥ ९ ॥

---

१. **प्रत्यहमित्यादि** प्रत्यहञ्चाविधेयत्वादिति सुवचम् । २. **कालनैयत्यात्** आषाढादिकालनियमितत्वात् । ३. **प्रायश्चित्तं नहि** प्रायश्चित्तकर्म न भवति । ४. **इदं** पवित्रं वक्ष्यमाणं वार्षिकं पवित्रम् । ५. **तस्मान्नियतकालत्वात्** आषाढ्यादिकालनियमितत्वाद्धेतोः । ६. **नैमित्तिकं** निमित्तकर्तव्यताकं भवति । ७. **इदं** वार्षिकं पवित्रम् । ८. **विघ्नापहारपूर्त्यादि** इति आदिशब्दः भोगमोक्षफलादेरुपलक्षणम् । कारणे पवित्रस्यैतस्य नैमित्तिकत्वमुक्तम् । तथाहि :"पवित्रकमहं वक्ष्ये सर्वदोषनिकृन्तनम् । नित्यं नैमित्तिकं काम्यं तद्भेदास्त्रिविधो भवेत् । दूर्वाङ्कुराक्षतोपेतैः बिल्वपत्रैस्समन्वितम् । दद्यात्पवित्रकं नित्यं मूलमन्त्रसमायुतम् । आषाढादित्रिमासेषु कुर्याद्वै वत्सरं प्रति । नैमित्तिकमिति ख्यातं पूर्वोक्तविधिना चरेत् । आषाढमासनक्षत्रे कर्तुर्जन्मदिनेऽपि च । अभीष्टफलदं चैव भोगमोक्षफलप्रदम्" इति ।

अमीषां सर्वदेवानां विधातव्यं पवित्रकम् ।
समारभ्य प्रतिपदं यावत्पञ्चदशि क्रमात् ॥ १० ॥
सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम् ।
कलौ कार्पासजं वापि यथाशक्ति पवित्रकम् ॥ ११ ॥
कीर्तितं द्विजकन्याभिस्त्रिगुणं त्रिगुणीकृतम् ।
धौतं शुक्लं शुभं सूत्रमन्यदप्युपयुज्यते ॥ १२ ॥
पट्टवल्कलपद्मोत्थं क्षौमदर्भशणोद्भवम् ।
मौञ्ज्यादिसम्भवं सूत्रं पवित्राय प्रशस्यते ॥ १३ ॥
प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो रविः ।
सादाख्यस्सर्वदेवाश्च क्रमेण नवतन्तुषु ॥ १४ ॥
अष्टोत्तरशतेनैकं सूत्राणां स्यात्पवित्रकम् ।
इत्थं त्रीणि तदर्धेन विंशत्या वा ससप्तया ॥ १५ ॥
एकाशीत्याऽथवा सूत्रैस्त्रिंशता वाष्टयुक्तया ।
पञ्चाशता वा कर्तव्यं तुल्यग्रन्थ्यन्तराळकम् ॥ १६ ॥

---

१. द्विजकन्याभिरिति । तथा च कारणे प्रोक्तं "द्विजकन्याकृतं सूत्रमुत्तमन्त्विति कीर्तितम् । मध्यमं नृपकन्यातः कन्यसं शूद्रया कृतम्" इति। २. प्रणवश्चन्द्रमा इति। अनेन श्लोकेन तन्तूनामधिदेवा उच्यन्ते। ३. नवतन्तुषु विन्यस्या इति शेषः । ४. अष्टोत्तरशतेनेति । एतदादिभिर्वाक्यैस्तन्तुसंख्याविकल्पः प्रोच्यते । ५. तुल्यग्रन्थ्यन्तराळकमिति । अनेन पादेन प्रोक्तानां त्रयाणां कङ्कणानां ग्रन्थिसंख्या तदन्तराळानि च तुल्यप्रमाणान्येव कार्याणि इत्युच्यते ।

द्वादशाङ्गुलमानानि[1] व्यासादष्टाङ्गुलानि वा ।
लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ॥ १७ ॥
तथैव पिण्डिकास्पर्शि चतुर्थं[2] सार्वदैवतम्[3] ।
गङ्गावतारकं कार्यं पवित्रमतिसुन्दरम् ॥ १८ ॥
धौतसूत्रमजातेन ग्रथितं गुह्यकेन तु ।
शोधितं बहुरूपेण वक्रमन्त्रेण रञ्जयेत् ॥ १९ ॥
रक्तचन्दनकाश्मीरकस्तूरीचन्द्ररोचनाः ।
हरिद्रा गैरिका चैषां रञ्जेदन्यतमेन तत् ॥ २० ॥
ग्रन्थयो दश कर्तव्या ह्यथवा तन्तुसंख्यया ।
अनन्तं वा यथाशोभमेकद्विचतुरङ्गुलम्[4] ॥ २१ ॥
प्रकृतिः[5] पौरुषी वीरा चतुर्थी त्वपराजिता ।
जयाऽन्या विजया षष्ठी ह्यजिताऽथ सदाशिवा ॥२२॥

---

१. द्वादशाङ्गुलमानानीति अनेन श्लोकेन उक्तानां त्रयाणां कङ्कणानां विस्तारमानभेदः प्रोच्यते । २. चतुर्थं तुरीयं गङ्गावतारकं पवित्रमिति भावः । ३. सार्वदैवतमिति सर्वदेवताप्रीतिजनकमित्यर्थः । ४. एकद्विचतुरङ्गुलमिति ग्रन्थीनामन्तराळं तत्तन्मानानुगुण्येन एकद्वित्रि-चतुरङ्गुलं कर्तव्यं अत्यन्ताधिकमाने न्यूनमाने च शोभानुपपत्तेः । ५. प्रकृतिरिति ग्रन्थिनवकपक्षे मनोन्मन्यन्तशक्तयः दशकपक्षे सर्वतोमुख्य-न्तशक्तयश्च ग्रन्थिषु न्यसनीयाः । अधिकग्रन्थिपक्षे एताश्शक्तय एव आवृत्य आवृत्य न्यसनीयाः । अथवा सर्वतोमुख्येव न्यसनीया ।

मनोन्मनी ततः प्रोक्ता दशमी सर्वतोमुखी ।
अधिका वा यथाशोभं कर्तव्या ग्रन्थयस्समाः ॥ २३ ॥
रत्नजे स्थण्डिले बाणे चले लोहे स्वयम्भुवि ।
यथोदितं पवित्राणामेकं कार्यं यथारुचि ॥ २४ ॥
चण्डेशरविवह्नीनां शिववत्सूत्रसम्पदि ।
अन्यथैकैकमेतेषां विदधीत पवित्रकम् ॥ २५ ॥
निजमूर्तौ गणाधीशे गुरावङ्गेषु पुस्तके ।
स्यादेकैकं तथा द्वारदिक्पालकलशादिषु ॥ २६ ॥
[1]हस्तादिनवहस्तान्तं लिङ्गानां स्यात्पवित्रकम् ।
अष्टाविंशतितो वृद्ध्या दशभिर्दशभिः क्रमात् ॥ २७ ॥
द्व्यङ्गुलाद्यन्तरास्तत्र क्रमादेकाङ्गुलोत्तराः ।
ग्रन्थयो मानमप्येषां लिङ्गविस्तारसम्मितम् ॥ २८ ॥

## पवित्रमण्टपपूजाविधिः ।

सप्तम्यां वा त्रयोदश्यां कृतनित्यक्रियश्शुचिः ।
भूषयेत्पुष्पवस्त्राद्यैस्सायाह्ने यागमन्दिरम् ॥ २९ ॥
कृत्वा [2]नैमित्तिकीं सन्ध्यां विशेषेण च तर्पणम् ।
परिगृहीतभूभागे सूत्रिते[3] सूर्यमर्चयेत् ॥ ३० ॥

---

१. हस्तादिनवहस्तान्तं इति हृदयाद्यङ्गघटितलिङ्गविषये प्रवित्रप्रमाणप्रदर्शनार्थमिदम् । २. नैमित्तिकीमिति पवित्रारोहणनिमित्तेन कर्तव्यामित्यर्थः । ३. सूत्रिते इति सूत्रवेष्टिते घटे इत्यर्थः ।

द्वारद्वारपालाद्यर्चनक्रमः ।

आचम्य सकळीकृत्य प्रणवार्घ्यकरो[1] गुरुः ।
द्वाराण्यस्त्रेण सम्प्रोक्ष्य पूर्वादिक्रमतोर्चयेत् ॥ ३१ ॥

ओं हां[2] शान्तिकलाद्वाराय नमः पूर्वे । ओं हां विद्याकलाद्वाराय नमः दक्षिणे । ओं हां निवृत्तिकलाद्वाराय नमः पश्चिमे । ओं हां प्रतिष्ठाकलाद्वाराय नमः उत्तरे । तथैव तच्छाखयोः[3] ओं हां नन्दिने नमः । ओं हां महाकाळाय नमः । ओं हां भृङ्गिणे नमः । ओं हां विनायकाय नमः । ओं हां वृषभाय नमः । ओं हां स्कन्दाय नमः । ओं हां देव्यै नमः । ओं हां चण्डेश्वराय नमः । इति प्रतिद्वारं द्वौ द्वौ[4] पूजयेत् ।

पश्चिमद्वारप्रवेशः ।

नित्यवत्[5] द्वारपालादीनभ्यर्च्य विधिनान्तरम् ।
प्रविश्य पश्चिमद्वारं वास्तुनाथं[6] प्रपूजयेत् ॥ ३२ ॥

---

१. प्रणवार्घ्यकर इति सामान्यार्घ्यकर इत्यर्थः । २. ओं हां शान्तीति क्रियाक्रमद्योतिकायां ह्रौं ह्रूं हां ह्रीं इत्यादिरीत्या द्वारबीजान्युपलभ्यन्ते । ३. तच्छाखयोरिति स्वदक्षिणवामभागस्थयोरिति शेषः । ४. द्वौ द्वौ इति पार्श्वकलशयोः स्वदक्षिणवामभागक्रमेण पूजयेदिति भावः। ५. नित्यवदिति पश्चिमद्वारे इति शेषः। ६. वास्तुनाथं प्रपूजयेदिति। ओं हां वास्त्वधिपतये ब्रह्मणे नमः इति मन्त्रेण नैर्ऋते पुष्पं दद्यादिति भावः ।

शिवहस्तकरणपूर्वकर्तव्यविधिः ।

भूत[1]शुद्धिं विशेषार्घ्यं स्व[2]शिरःप्रोक्षणादिकम् ।
विधाय यज्ञसम्भारं पूर्व[3]वत्परिमन्त्रयेत् ॥ ३३ ॥

शिवहस्तारोपणविधिः ।

द[4]र्भदूर्वाक्षतैः पुष्पैः चन्दनेन हृदादिभिः ।
शिवहस्तं विधायेत्थं स्वशिरस्यधिरोपयेत् ॥ ३४ ॥

शिवहस्तभावना ।

शिवोऽहमा[5]दिसर्वज्ञो मम यज्ञे प्रधानता ।
अत्यर्थं [6]भावयेदेवं ज्ञानखड्गकरो गुरुः ॥ ३५ ॥

मण्टपसंस्कारः ।

नैरृतं देशमासाद्य प्र[7]क्षिपेदुदगाननः ।
अर्घ्याम्बु प[8]ञ्चगव्यं च समन्तान्मखमण्टपे ॥ ३६ ॥

---

१. भूतशुद्धिं इति । इदमङ्गन्यासकलान्यासादेरुपलक्षणम् । २. स्वशिरःप्रोक्षणादिकं इति । विशेषार्घ्याम्भसा इति भावः । आदिशब्दात् यागोपकरणद्रव्यजातस्य तदम्भसा करणीयमस्त्रसम्प्रोक्षणाद्युपलक्ष्यते । ३. पूर्ववदिति कवचेनाभ्युक्षणं, हृदयेनाभिमन्त्रणं, अवकुण्ठनं अमृतीकरणञ्च कुर्यादिति भावः । ४. दर्भदूर्वाक्षतैरिति वामाङ्गुष्ठेन दक्षिणकरतले चन्दनमालिप्य दूर्वाक्षतैरभ्यर्च्य आसनमूर्तिमूलैस्संहितया च पूजयित्वा शिवहस्तं कल्पयेदिति भावः । ५. आदिसर्वज्ञ इति आदिश्चासौ सर्वज्ञश्च आदिसर्वज्ञः । अत्र आदिशब्दः सर्वेषामनन्तादीनां गुरूणां प्रथमः इत्यमुमर्थमवबोधयति । ६. भावयेदिति शिवाऽद्वैतमिति शेषः । ७. प्रक्षिपेदिति सम्प्रोक्षयेदित्यर्थः । ८. पञ्चगव्यञ्चेति संसाध्येति शेषः

चतुष्पथान्तसंस्कारैर्वीक्षणाद्यैस्सुसंस्कृते ।

मण्टपसंस्कारानन्तरकरणीयविधिः ।

विक्षिप्य विकिरं तत्र कुशकूर्च्योपसंहरेत् ॥ ३७ ॥
तानीशदिशि वर्धन्या आसनायोपकल्पयेत् ।
नैर्ऋते वास्तुगीर्वाणं द्वारे लक्ष्मीं प्रपूजयेत् ॥ ३८ ॥

सपरिकरशिवकुम्भवर्धनीपूजाविधिः ।

पश्चिमाभिमुखं कुम्भं सर्वधान्योपरि स्थितम् ।
प्रणवेन वृषारूढं सिंहस्थां वर्धनीं ततः ॥ ३९ ॥
कुम्भे साङ्गं शिवं देवं वर्धन्यामस्त्रमर्चयेत् ।
दिक्षु शक्रादिदिक्पालान् विष्णुब्रह्मावसानकान् ॥४०॥

---

१. चतुष्पथान्तेति वीक्षणादिचतुष्पथान्तसंस्कारैरित्यर्थः । २. द्वारे इति पश्चिमे इति शेषः । ३. वृषारूढमिति चलासनारूडं कृत्वेति भावः । ४. अस्त्रमर्चयेदिति अर्चनक्रमस्तु ओं अस्त्रासनाय हुंफण्णमः । ओं अस्त्रमूर्तये हुंफण्णमः । ओं श्लीं पशूं हुंफडस्त्राय हुंफण्णमः । ओं हृदयाय हुंफण्णमः । ओं श्लीं शिरसे हुंफण्णमः । ओं पं शिखायै हुंफण्णमः । ओं शूं कवचाय हुंफण्णमः । ओं हुं नेत्रेभ्यो हुंफण्णमः । ओं फट् अस्त्राय हुंफण्णमः इति पाशुपतास्त्रं पूजयेदिति भावः । ५. दिक्षु इति मण्टपस्याभ्यन्तरदिक्षु इत्यर्थः । ६. शक्रादिदिक्पालानिति । पूजयेदिति शेषः । पूजाक्रमस्त्वेवं प्रकारतः प्राच्यादिदिक्स्थितकुम्भेषु महाकाळसूर्ययोर्मध्ये ओं हां इन्द्राय नमः ओं हां अग्नये नमः ओं हां यमाय नमः गणेशस्य पश्चिमकुम्भे ओं हां निर्ऋतये नमः ओं हां वरुणाय नमः स्कन्दस्योत्तरे ओं हां वायवे नमः ओं हां कुबेराय नमः चण्डेशस्य पूर्वे ओं हां ईशानाय नमः तत्रैव तत्कुम्भस्य दक्षिणे ओं हां ब्रह्मणे नमः । नैर्ऋते तत्कुम्भस्योत्तरे ओं हां विष्णवे नमः इति सम्पूजयेत् ।

वर्धनीं सम्यगादाय घटपृष्ठानुगामिनीम् ।
शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशान्तगोचराम् ॥ ४१ ॥

भो भो शक्र त्वया स्वस्यां दिशि विघ्नप्रशान्तये ।
सावधानेन यागान्तं यावत्स्थेयं शिवाऽऽज्ञया ॥ ४२ ॥

अविच्छिन्नपयोधारां मूलमन्त्रमुदीरयन् ।
समन्ताद्भ्रामयेदेनां[1] रक्षार्थं शस्त्ररूपिणीम् ॥ ४३ ॥

पूर्वं कलशमारोप्य शस्त्राळिं तस्य वामतः ।
समग्रासनके[2] कुम्भे यजेद्देवं स्थिरासनम् ॥ ४४ ॥

वर्धन्यां प्रणवस्थायामायुधं तदनु द्वयोः[3] ।
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ॥ ४५ ॥

कुम्भे निवेद्य[4] बोधासिं[5] मूलमन्त्रजपं तथा ।
तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेदपि ॥ ४६ ॥

गणेशपूजाविधिः ।

गणेशं वायुदिग्भागे पूजयित्वा चतुर्भुजम् ।
पद्मिनीपत्रसङ्काशं सायुधं विघ्नवारणम् ॥ ४७ ॥

---

१. समन्तादिति एवमेव तत्तद्दिक्षु तत्तद्दिक्पालेभ्यः तत्तच्छ्लोकैरिति भावः । २. समग्रासनके इति आधारशक्त्यादिसमग्रासनके इत्यर्थः । ३. द्वयोः शिवकुम्भवर्धन्योः । ४. निवेद्य समर्प्य । ५. बोधासिं ज्ञानखड्गम् ।

गुरुपूजा ।

ऐशान्यां च गुरुं चैव स्थापयेत्सततं बुधः ।

स्वेष्टलिङ्गपूजा ।

पञ्चामृतादिभिर्देवं[1] स्नापयित्वा विधानतः ॥ ४८ ॥

यजेत्पञ्चोपचारेण पूर्वोक्तविधिना[2] बुधः ।

अग्निकार्यविधिः ।

कृत्वा कुण्डादिसंस्कारानभ्यर्च्य शिवपावकम् ॥ ४९ ॥

विधिवच्चरुकं[3] कृत्वा संम्पाता[4]हुतिशोधितम् ।

देवाग्न्यात्मविभेदेन दर्व्या तं विभजेत्त्रिधा ॥ ५० ॥

दत्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनः ।

शिवस्य व्रतभोगाङ्गद्रव्यनिवेदनविधिः ।

देयं सक्षीरवृक्षोत्थं द्वादशाङ्गुलमायतम् ॥ ५१ ॥

नरेण वर्मणा वापि पूर्वतो दन्तधावनम् ।

दक्षिणे भस्म दातव्यं रूपिणा शिखयाऽथवा ॥ ५२ ॥

मृत्तिका पश्चिमे देया सद्योजातेन वा हृदा ।

उत्तरे देवदेवस्य दद्यादामलकीफलम् ॥ ५३ ॥

---

१. देवं स्वेष्टलिङ्गस्थशिवम् । २. पूर्वेति पृथिव्यादिपञ्चभूतसम्बन्धिना । ३. चरुकमिति चरुपाकविधिः पवित्रोत्सवविधौ स्पष्टम् । ४. सम्पातेति स्वेत्यग्नौ हेति संस्कार्यस्योपरि शेषाज्यपातनमेव सम्पातहोमः । अनेन चरुं शुद्धं कृत्वेति भावः ।

जलं च वामदेवेन शिरसा वापि पावनम् ।
ऐशान्यामीशमन्त्रेण मूलमन्त्रेण वा जलम् ॥ ५४ ॥

सुगन्धि पञ्चगव्यं च पलाशपुटसंस्थितम् ।
ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम् ॥५५॥

अगरुं नैर्ऋताशायां वायव्यां च चतुस्समम्[1] ।
होमद्रव्याणि सर्वाणि सद्योजाते[2] कुशैस्सह ॥ ५६ ॥

दण्डाक्षसूत्रकौपीनभिक्षापात्राणि रूपिणा ।
कज्जलं कुङ्कुमं तैलं शलाकां केशशोधनम् ॥ ५७ ॥

ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि ।
आसनं पादुके पात्रं योगपट्टातपत्रकम् ॥ ५८ ॥

ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये ।
पूर्वस्यां चरुकं साज्यं सानुगन्धादिकं[3] नरे ॥ ५९ ॥

यदसम्पन्नमेतेषां मनसा तत्प्रकल्पयेत् ।

पवित्राणामधिवासदिने कर्तव्यताक्रमः ।

पवित्राणि[4] समादाय प्रोक्षितान्यस्त्रवारिणा ॥ ६० ॥

---

१. चतुस्समं इति । चन्दनागरुकर्पूरकुङ्कुमानि इति भावः । २. सद्योजाते पश्चिमे । ३. सानुगन्धादिकं हस्तोद्वर्तनमुखवाससहितमिति भावः । दन्तधावनमृद्भस्मजलगव्यहोमद्रव्यदण्डाक्षसूत्रादिकं वृतवृद्धये देयम् । गोरोचनाकुङ्कुमताम्बूलादिकं भोगाङ्गं वस्तु भोगवृद्धये देयमिति भावः । ४. पवित्राणीति विशुद्धभाजनस्थानीति शेषः ।

संहितामन्त्रपूतानि नीत्वा पावकसन्निधौ ।
कृष्णाजिनादिनाऽऽच्छाद्य स्मरन् संवत्सरात्मकम् ॥
साक्षिणं सर्वकृत्यानां गोप्तारं[1] शिवमव्ययम् ।
स्वेतिहेतिप्रयोगेण[2] मन्त्रसंहितया पुनः ॥ ६२ ॥
शोधयित्वा पवित्राणि ह्येकविंशतिवारतः[3] ।

गन्धपवित्रारोपणविधिः ।

यागधामवृषस्थानप्रासादानलसंश्रयान् ॥ ६३ ॥
कारकौघं च सूत्रेण वर्मणा परिवेष्टयेत् ।
पूजितायाथ सूर्याय दत्वा गन्धपवित्रकम्[4] ॥ ६४ ॥
प्रविश्य वास्तुनाथाय ब्रह्मणे विदधीत तत् ।
सास्त्रेभ्यो लोकपालेभ्यो पवित्राणि स्वनामतः ॥ ६५ ॥
शिवकुम्भाय वर्धन्यै दद्याल्लम्बोदराय च ।
विघ्ननायकमभ्यर्च्य गुरुपादाम्बुजे ततः ॥ ६६ ॥
आत्मानं च पवित्रेण गन्धपूर्वेण भूषयेत् ।
अथ सर्वौषधीलिप्तं[5] मानोन्मानविवर्जितम् ॥ ६७ ॥

---

१. **गोप्तारमिति** सर्वकृत्यपालकमिति भावः । २. **स्वेतिहेतिप्रयोगेण** इति सम्पाताहुतिना इत्यर्थः । ३. **ह्येकविंशतिवारतः** इति मातृकायां वाराणामेकविंशतिमिति वर्तते । ४. **गन्धपवित्रकमिति** गन्धाधिवासितं पवित्रमिति भावः । गन्धपदेन कृष्णागुरुकर्पूरकस्तूरीनवनीतोशीरचन्दनादय उच्यन्ते । ५. **सर्वौषधीलिप्तमिति** मुराकुष्ठरजनीमुस्ताद्योषधीलेपितमिति भावः ।

धूपितं पुष्पधूपाद्यैरेकग्रन्थ्यल्पतन्तुकम् ।
चतुर्वर्गफलोपायमामन्त्रणपवित्रकम् ॥ ६८ ॥
विधायाञ्जलिमध्यस्थमामन्त्रणपदं[1] पठेत् ।
तद्यथा—ओं समस्तविधिविच्छिद्रपूरणेश[2] मखं[3] प्रति ॥
प्रभवाऽऽमन्त्रयामि[4] त्वां त्वदिच्छाव्याप्तकारकः[5] ।
तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ॥ ७० ॥
सर्वथा[6] सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे ।
अथवा—आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ॥
मन्त्रेशैर्लोकपालैश्च सहितः परिवारकैः ।
निवेदयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ॥ ७२ ॥
नियमं[7] च करिष्यामि परमेश तवाऽऽज्ञया ।
इत्येवं देवमामन्त्र्य रेचकेणामृतीकृतम् ॥ ७३ ॥

---

१. आमन्त्रणपदं इति पदशब्दोऽत्रचिह्नपरः । तथा च आमन्त्रणद्योतकं मन्त्रश्लोकमिति भावः । २. समस्तविधिविच्छिद्रेति पवित्रारोपणकालात्पूर्वमनुष्ठितानां सर्वपूजाविधीनां यानि विच्छिद्राणि असम्पूर्णकरणादिसंज्ञानि तेषां पूरणेश परिपूर्तिकरणपटो इति भावः । ३. मखं प्रति यागं प्रति । ४. प्रभवाऽऽमन्त्रयामीति प्रभो आमन्त्रयामीति च्छेदः । ५. त्वदिच्छाव्याप्तकारक इति भवदीयाऽऽज्ञालब्धसाधनः इत्यर्थः । ६. सर्वथा सर्वदा शम्भो इति सूर्यादीनां सर्वथा सर्वदा सूर्य इत्यादिरीत्योह्यः । ७. नियममिति व्रतावधेर्नियममित्यर्थः ।

शिवान्तं मूलमुच्चार्य तच्छिवाय निवेदयेत् ।
जपं स्तुतिं प्रणामं च कृत्वा शम्भुं क्षमापयेत् ॥७४॥

अग्निस्थशिवार्थक्रिया ।

हुत्वा चरोस्तृतीयांशं विदद्दीत[1] शिवाग्नये ।
ओं पूर्वादिदिगीशमातृगणरुद्रक्षेत्रपालादिभ्यस्स्वाहा ।
इति दिङ्नामभेदेन सर्वदिक्षु बहिर्बलिम् ॥ ७५ ॥
दद्यादन्ये तु वायव्यां क्षेत्रपालबलिं जगुः ।
समस्तविधिविच्छिद्रपूरकं होममाचरेत् ॥ ७६ ॥
पूर्णां व्याहृतिहोमं च कृत्वा रुन्धीत पावकम् ।

ततः ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा । ओं हां अग्नीषोमाभ्यां स्वाहा । ओं हां अग्नये स्विष्टकृते स्वाहा । इत्याहुतिचतुष्टयं दद्यात् ।

वह्निकुण्डार्चितं देवं मण्डलाभ्यर्चिते शिवे ॥ ७७ ॥
नाडीसन्धानरूपेण विधिना योजयेत्ततः ।

संस्कृतपवित्ररक्षा ।

पूते वंशादि(के)[2]जे पात्रे विन्यस्यास्त्रं सुसङ्कटम् ॥७८॥
हृदयं च ततस्तत्र पवित्राण्यधिरोपयेत्[3] ।
कलाभिर्वा षडङ्गैर्वा मन्त्रैर्वा ब्रह्मवाचकैः ॥ ७९ ॥

---

१. विदद्दीतेति पवित्रकमिति शेषः । २. वंशादिके वंशादिसम्भवे । ३. अधिरोपयेत् निदध्यात् ।

अथवा मूलमन्त्रेण पवित्राण्यधिरोपयेत् ।
हृदयं कवचं शस्त्रं तेषामुपरि योजयेत् ॥ ८० ॥

इत्येवं सम्पुटीकृत्य पिदध्यादन्यवस्तुना ।
संवेष्ट्य वर्मणा सूत्रैः पूजयित्वाङ्कशम्बरैः ॥ ८१ ॥

रक्षार्थं जगदीशाय भक्तिनम्रस्समर्पयेत् ।

विद्यागुरुपूजादिकम् ।

पूजिते पुष्पधूपाद्यैः दत्वा सिद्धान्तपुस्तके ॥ ८२ ॥

गुरोः पादान्तिकं गत्वा भक्त्या दद्यात्पवित्रकम् ।
निर्गत्य बहिराचम्य गोमये मण्डलत्रये ॥ ८३ ॥

पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भवेत् ।
आचान्तो मन्त्रसन्नद्धः कृतसङ्गीतजागरः ॥ ८४ ॥

स्वपेदनुस्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे ।
अनेनैव प्रकारेण मुमुक्षुरपि संविशेत् ॥ ८५ ॥

केवलं भस्मशय्यायां सोपवासस्समाहितः ।

इति पवित्राधिवासविधिस्सम्पूर्णः ।

——:o:——

१. जगदीशायेति कलशायतनस्थायेति शेषः । २. दत्वा सिद्धान्तेति पवित्रकमिति शेषः । ३. क्रमाद्भवेत् आसेवेत इत्यर्थः ।

## अथ पवित्राधिवासद्वितीयदिवसे पवित्रारोपण पूर्वकरणीयविधिः ।

अथ प्रातस्समुत्थाय कृतस्नानादिको गुरुः ॥ ८६ ॥
कृतसन्ध्यार्चनो मन्त्री प्रविश्य मखमण्टपम् ।
समादाय पवित्राणि[1] ह्यविसर्जितदैवतम् ॥ ८७ ॥
ऐशान्यां भाजने शुद्धे स्थापयेत्कृतमण्डले ।
ततो विसृज्य[2] देवेशं निर्माल्यमपनीय च ॥ ८८ ॥
पूर्ववद्भूतले शुद्धे कृतनित्याह्निकद्वयः[3] ।
आदित्यद्वारदिक्पालकुम्भेस्त्राळौ शिवेनले ॥ ८९ ॥
नैमित्तिकीं सविस्तारां कुर्यात्पूजां विशेषतः ।
मन्त्राणां तर्पणं[4] प्रायश्चित्तं[5] होमं शराणुना ॥ ९० ॥
अष्टोत्तरशतं हुत्वा दद्यात्पूर्णाहुतिं शनैः ।

### मण्टपास्थितदेवानां पवित्रारोपणविधिः ।

पवित्रं भानवे दत्वा समाचम्य ददीत तत् ॥ ९१ ॥

---

१. **समादाय पवित्राणि** इति पवित्राणीति पदं वृताङ्गानामुपलक्षणम् । २. **ततो विसृज्येति** अष्टपुष्पिकयेति शेषः । ३. **कृतनित्याह्निकद्वय** इति प्रातर्मध्याह्नकृत्यद्वय इत्यर्थः । ४. **तर्पणमिति** । सामान्यविशेषतर्पणे इति भावः । ५. **प्रायश्चित्तं होमं शराणुना अष्टोत्तरशतं हुत्वेति** । दुस्स्वप्नादिशान्तये अस्त्रमन्त्रेण अष्टोत्तरशतं प्रायश्चित्तं हुत्वेति भावः ।

द्वारपालादिदिक्पालकुम्भवर्धनिकासु च ।
सन्निधाने ततश्शम्भोरुपविश्य निजासने ॥ ९२ ॥

पवित्रमात्मने दद्याद्गणाय[1] गुरुपङ्क्तये ।

शिवस्य पवित्राऽऽरोपणविधिः ।

पवित्रकमथाऽऽदाय किञ्चित्कलशसम्मुखः ॥ ९३ ॥

स्मरन्[2] कालात्मकं देवं प्रब्रूयादिति शङ्करम् ।
ओं कालात्मना[3] त्वया देव यद्दृष्टं मामके विधौ[4] ॥९४॥

कृतं क्लिष्टं[5] समुत्सृष्टं[6] हृतं[7] गुप्तञ्च[8] मत्कृतम् ।
तदस्तु क्लिष्टमक्लिष्टं कृतं पुष्टमसत्कृतम् ॥ ९५ ॥

---

१. गणायेति गणपतये इत्यर्थः । २. स्मरन् कालात्मकम् इति त्रुटिलवनिमेषकाष्ठाकलामुहूर्तघटिकायामाहोरात्रपक्षमासर्त्वयनसंवत्सर-युगमन्वन्तरकल्पमहाकल्पाख्योऽष्टादशावयवः कालः । स आत्मा नित्याधिष्ठेयशरीरं यस्य सः तं कालात्मकम् । ३. ओं कालात्मनेति कालात्मनेत्यादिश्लोकद्वयस्याऽयमर्थः । ४. मामके विधौ मत्कर्तृकपूजाव्यापारे कालात्मना त्वया दृष्टम् । ५. क्लिष्टं कृतं यत्कर्म असम्पूर्णं यथा तथा अनुष्ठितम् । ६. समुत्सृष्टं यत्कर्म अज्ञानादिना संस्कृतिमुपेक्ष्य विरचितं आहोस्विन्नानुष्ठितम् । ७. हृतं कार्यवशात् बुद्धिपूर्वतः कृत्यव्यग्रतया वा स्वावसरकार्यं यदनुष्ठितम् । ८. गुप्तं च धनलोभादिना गोपितम् । तत् क्लिष्टं कर्म अक्लिष्टमस्तु असत्कृतं कर्म पुष्टमस्तु ।

सर्वात्मना[1]ऽमुना[2] शम्भो पवित्रेण त्वदिच्छया ।

ओं पूरय[3] पूरय मख[4]व्रत[5]नियमे[6]श्वराय स्वाहा ।

प्रथमपवित्रारोपणविधिः ।

आत्म[7]तत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ॥ ९६ ॥

मूलं मायान्त[8]मुच्चार्य पवित्रेणार्चयेच्छिवम् ।

द्वितीयपवित्रारोपणविधिः ।

विद्यातत्त्वे च विद्यान्ते[9] विष्णुकारणपालिते ॥ ९७ ॥

ईश्वरान्तं[10] समुच्चार्य पवित्रमधिरोपयेत् ।

तृतीयपवित्रारोपणविधिः ।

शिवान्ते[11] शिवतत्त्वेऽथ रुद्रकारणपालिते ॥ ९८ ॥

---

१. **सर्वात्मनेति** आत्मतत्त्वविद्यातत्त्वशिवतत्त्वत्रयरूपत्वेन सर्वव्यापकेनेत्यर्थः । २. **अमुना** तत्त्वत्रयरूपेणाऽऽनेन । ३. **पूरय पूरयेति** क्लिष्टादिलक्षणकृत्स्नकर्मच्छिद्राणीति शेषः । ४. **मखव्रतनियमेश्वरायेति मखो** यागः । ५. **व्रतं** कृष्णाष्टम्यादि । ६. **नियमः** अक्रोधादयः । ७. **आत्मतत्त्वे** इति अवास्थितानिति शेषः । ८. **मायान्तमिति** मायातत्त्वान्तव्यापकस्य तालुपद्मे प्रकाशमानस्य रुद्रवाचकस्य मकारान्तं उच्चारः कार्यः इति भावः । ९. **विद्यान्ते** शुद्धविद्यान्तव्याप्तिके इत्यर्थः । १०. **ईश्वरान्तं समुच्चार्येति** ईश्वरतत्त्वान्तव्यापकस्य भ्रूमध्ये प्रकाशमानस्य ईश्वरवाचकस्य बिन्दोरन्तं उच्चारणं कार्यमिति भावः । ११. **शिवान्ते** शिवशक्त्यवधिव्याप्तिके ।

शिवान्तं[1] मूलमुच्चार्य पवित्रमधिरोपयेत् ।

तुरीयपवित्रारोपणविधिः ।

सर्वकारणपाल्येषु[2] सर्वतत्त्वेषु[3] सुव्रत ॥ ९९ ॥
मूलं लयान्तमुच्चार्य[4] दद्याद्गङ्गावतारकम् ।
आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकम् ॥ १०० ॥
विनिर्दिष्टं बुभुक्षूणां शिवविद्यात्मभिः क्रमात् ।
स्वाहान्तं वा नमोन्तं वा मन्त्रमेषामुदीरयन् ॥१०१॥
आचार्यस्सर्वदेवानां[5] विदधीत पवित्रकम् ।

पवित्रचतुष्कमूलमन्त्रक्रमः ।

ओं हौं आत्मतत्वाधिपतये शिवाय स्वाहा । ओं हौं विद्यातत्त्वाधिपतये शिवाय स्वाहा । ओं हौं शिवतत्त्वाधिपतये शिवाय स्वाहा इति क्रमेण पवित्रत्रयं दत्त्वा ततः ओं हौं सर्वतत्त्वाधिपतये शिवाय स्वाहा ।

इति मन्त्रं समुच्चार्य दत्वा गङ्गावतारकम् ॥ १०२ ॥

---

१. शिवान्तं मूलमुच्चार्येति ब्रह्मरन्ध्रान्ते प्रकाशमानस्य सदाशिववाचकस्य अर्धचन्द्रनिरोधिभ्यां सहितस्य नादस्यान्तं मन्त्रमुच्चार्य लिङ्गमूर्ध्नि पवित्रं दद्यात् । २. सर्वकारणपाल्येषु इति ब्रह्मादिकारणपञ्चकपरिरक्षितेषु इत्यर्थः । ३. सर्वतत्त्वेषु अवस्थितमिति शेषः । ४. लयान्तं द्वादशान्तम् । ५. सर्वदेवानां यागमण्टपास्थितदेवानाम् ।

शिवाय विज्ञापनम् ।

पुष्पाञ्जलिपुटो भूत्वा भक्त्या विज्ञापयेत्प्रभुम् ।
त्वं गतिस्सर्वभूतानां संस्थितस्त्वं चराचरे ॥ १०३ ॥

अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ।
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥१०४॥

मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यत्कृतम् ।
जपहोमार्चनाहीनं कृतं नित्यं मया तव ॥ १०५ ॥

अकृतं[1] वाक्यहीनं[2] च तत्पूरय महेश्वर ।
सुपूतस्त्वं[3] सुरेशान पवित्रं[4] पापनाशनम्[5] ॥ १०६ ॥

त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् ।
खण्डितं यन्मया देव वृतं वैकल्ययोगतः ॥ १०७ ॥

एकीभवतु तत्सर्वं तवाऽऽज्ञासूत्रगुम्भितम् ।

विज्ञापनानन्तरकरणीयाविधिः ।

जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥१०८॥

प्रणम्याऽमलचित्तेन सन्तुष्टं भावयेच्छिवम् ।
चतुरस्त्रीनथ द्वौ वा मासान् मासार्धमेव वा ॥ १०९ ॥

---

१. अकृतं च्युतं सन्ध्योपासनादि । २. वाक्यहीनं च स्वागतविज्ञापनादिवाक्यरिक्तमित्यर्थः । ३. सुपूतः अनादिनिर्मलः । ४. पवित्रं पतनत्राणहेतुः । ५. पापनाशनं मलादिनाशनं वस्तु त्वमेवेत्यर्थः ।

सप्ताहं पञ्चरात्रं वा त्र्यहमेकाहमेव वा ।
गुरुणा वा यथोद्दिष्टं गृहीत्वा नियमं ततः ॥ ११० ॥
प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती ।

अग्निकार्यविधिः ।

पावकस्थे शिवेप्येवं पवित्राणां चतुष्टयम् ॥ १११ ॥
समारोप्य समभ्यर्च्य पुष्पदूर्वाक्षतादिभिः ।
अन्तर्बलिं पवित्रं च रुद्रादिभ्यो निवेदयेत् ॥ ११२ ॥
प्रविश्यान्तश्शिवं स्तुत्वा सप्रणामं क्षमापयेत् ।
प्रायश्चित्तकृते[1] होमं कृत्वा हुत्वा च पायसम्[2] ॥११३॥
होमव्याहृतिभिर्हुत्वा रुन्ध्यान्निष्ठुरयाऽनलम् ।
अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयम् ॥ ११४ ॥
दिक्पतिभ्यस्ततो दत्वा सपवित्रं बहिर्बलिम् ।
सिद्धान्तपुस्तके दद्यात्सप्रणामं पवित्रकम् ॥ ११५ ॥

व्याहृतिहोममन्त्रक्रमः ।

ओं हां भूस्स्वाहा । ओं हां भुवस्स्वाहा । ओं हां सुवस्स्वाहा ।

ओं भूर्भुवस्सुवस्स्वाहा इति व्याहृतयः ।

---

१. प्रायश्चित्तकृते होमं इति प्रायश्चित्तं होमं शराणुना अष्टोत्तरशतं हुत्वा इत्युक्तं स्मर्तव्यम् । २. पायसं चरुलक्षणम् ।

अग्न्याहुतिचतुष्टयमन्त्रक्रमः ।

ओं हां अग्नये स्वाहा । ओं हां सोमाय स्वाहा । ओं हां अग्नीषोमाभ्यां स्वाहा । ओं हां अग्नये स्विष्टकृते स्वाहा इत्याहुतिचतुष्टयं कृत्वा ।

आचार्यपूजाविधिः ।

गुरुं शिवमिवाऽभ्यर्चेत् वस्त्रवित्तविभूषणैः ।
तुष्टेन गुरुणाऽनेन तुष्टो भवति शङ्करः ॥ ११६ ॥
समग्रं सफलं तस्य क्रियाकाण्डादि वार्षिकम् ।
यस्य तुष्टो गुरुस्सम्यगित्याह परमेश्वरः ॥ ११७ ॥
इत्थं गुरोस्समारोप्य हृदालम्भिपवित्रकम् ।

सदस्यपूजा ।

लिङ्गिनो भोजयेद्भक्त्या द्विजान्धकृपणानपि[1] ॥ ११८ ॥
वस्त्रैर्दक्षिणया शक्त्या पूजयित्वा वदेदिति ।
दानेनाऽनेन देवेशः प्रीयतां मे सदाशिवः ॥ ११९ ॥

एकाहपक्षे द्वितीयदिनकरणीयविधिः ।

प्रातस्स्नानादिकं[2] कृत्वा पवित्राण्याहरेद्विभोः[3] ।
अष्टपुष्पिकया देवं पूजयित्वा विसर्जयेत् ॥ १२० ॥
नित्यं नैमित्तिकं कृत्वा विस्तरेण यथापुरा[4] ।
पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत् ॥ १२१ ॥

---

१. कृपणः दरिद्रः । २. प्रातस्स्नानादिकमिति अपरेद्युरिति शेषः । ३. विभोः शिवात् । ४. यथा पुरा अधिवासदिनवत् ।

प्रायश्चित्तं ततोऽस्त्रेण हुत्वा पूर्णाहुतिं यजेत् ।

कर्मसमर्पणविधिः ।

भुक्तिकामश्शिवायाथ कुर्या[1]त्कर्मसमर्पणम् ॥ १२२ ॥

त्वत्प्र[2]सादेन कर्मेदं मा[3]स्तु मे नाथ बन्धकम् ।

यागविसर्जनविधिः ।

वह्निस्थं नाडियोगेन शिवं संयो[4]जयेच्छिवे ॥ १२३ ॥

हृ[5]दि न्यस्याणुसङ्घातं पावकं च विसर्जयेत् ।

समाचम्य प्रविश्यान्तः कुम्भालुगतशम्बरान् ॥१२४॥

शिवे संयोज्य सापेक्षं क्षमस्वेति विसर्जयेत् ।

विसृज्य लोकपालादीन्

पवित्रचण्डेशपूजाविधिः ।

आदायेशपवित्रकम् ॥ १२५ ॥

सति चण्डेश्वरे पूजां कृत्वा द[6]त्वा पवित्रकम् ।

तन्निर्माल्यादिकं तस्मै स[7]पवित्रं समर्पयेत् ॥ १२६ ॥

---

१. कुर्यादिति भुक्तिकामः "त्वत्प्रसादेन कर्मेदं ममास्तु फलसाधकं" इति ब्रुवन् इति शेषः । २. त्वत्प्रसादेनेति मुक्तिकाम इति शेष । ३. मास्त्विति मास्तु इति ब्रुवन् कर्म समर्पयेदिति शेषः । ४. संयोजयेच्छिवे मण्डलस्थे शिवे इत्यर्थः । ५. हृदि न्यस्याणुसङ्घातमिति वह्निमन्त्रानुपसंहृत्य स्वहृदये निवेशयेदिति भावः । ६. दत्वा पवित्रकमिति अनिर्माल्यं चण्डेशाय कल्पितं पवित्रमिति भावः । ७. सपवित्रं निर्माल्यपवित्रसहितम् ।

अथ वा स्थण्डिले चण्डपीठे वा पूर्ववद्यजेत् ।

चण्डेश्वरं प्रति विज्ञापनम् ।

यत्किञ्चिद्वार्षिकं कर्म कृतं न्यूनाधिकं मया ॥ १२७ ॥
तदस्तु परिपूर्णं मे चण्डनाथ तवाऽऽज्ञया ।
त्वत्प्रसादाच्चण्डनाथ देवदेवस्सदाशिवः ॥ १२८ ॥
मम प्रसन्नो भवतु रक्ष शम्भुमुखोद्भव ।
समयाचारहीनानामनाथानां गतिर्भवान् ॥ १२९ ॥
आचारहीनं पतितं रक्ष मां चण्डनायक ।
इति विज्ञाप्य चण्डेशं नत्वा स्तुत्वा विसर्जयेत् ॥

चण्डविज्ञापनाऽनन्तरकरणीयविधिः ।

अन्धकूपेऽथवा तोये तन्निर्माल्यादिकं क्षिपेत् ।
इत्थं सम्पूज्य चण्डेशं भूमिं गोमयवारिणा ॥ १३१ ॥
विशोध्य शुद्धदेहस्तु स्नापयित्वा शिवं यजेत् ।
पञ्चयोजनसंस्थोऽपि पवित्रं गुरुसन्निधौ ॥ १३२ ॥
कुर्वीत विधिनाऽनेन लभते वाञ्छितं फलम् ।
सर्वं वै त्वादिशैवानां दीक्षितानां शिवोदितं ॥ १३३ ॥
परोपकारशीलेन श्रीमता सोमशम्भुना ।
क्रियाकाण्डक्रमावळ्यां पवित्रकविधिः कृतः
॥ १३४-४७२ ॥

इति क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
पवित्रोत्सवविधिस्सम्पूर्णः ।



॥ श्रीः ॥

# दमनपूजाविधिः ।

## (दमनपुरावृत्तं तत्पूजावश्यकता च)

ह[1]रकोपात्पुरा जातो भैरवो दमनाह्वयः ।
दा[2]न्तास्तेन सुरास्सर्वे दानवाश्च महाबलाः ॥ १ ॥

प्रीतेनाथ शिवेनोक्तो विटपो भव भूतले ।
तां तनुं त्वमनुप्राप्य मद्भोगाय भविष्यसि ॥ २ ॥

पूजयिष्यन्ति ये मर्त्या देवं त्वत्पल्लवादिभिः ।
ते यास्यन्ति परं स्थानं दमन त्वत्प्रभावतः ॥ ३ ॥

ये पुनर्नैकरिष्यन्ति दामनं पर्व मानवाः ।
तेषां ते चैत्रमासोत्थं दत्तं पुण्यफलं मया ॥ ४ ॥

स्वच्छन्दभैरवे तन्त्रे यद्यपीदमुदाहृतम् ।
तथापीह समानत्वात्सिद्धान्तेप्युपयुज्यते ॥ ५ ॥

### दमनसमीपगमनविधिः ।

सप्तम्यां वा त्रयोदश्यां गत्वा दमनकान्तिकम् ।
शोधयित्वाऽस्त्रमन्त्रेण पूजयेत्संहिताणुभिः ॥ ६ ॥

---

१. हरकोपादिति हरकोपस्य हेतुः नैरन्तर्यदेवासुरयुद्धसम्भूतजगत्क्षय एव । २. दान्ता इति उपशमितपराक्रमा आसन् इति भावः ।

अथ सम्बोधयेद्दामं भव[1]वाक्येन मन्त्रवित् ।

दमनाऽऽमन्त्रणविधिः ।

हरप्रसादसम्भूत त्वमत्र सन्निधीभव ॥ ७ ॥

शिवकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ।

तदनन्तरकरणीयविधिः ।

एवं दमनमामन्त्र्य संरक्ष्य भवनं व्रजेत् ॥ ८ ॥

यदि दूरं तदानीय समूलं मृत्तिकान्वितम् ।

पुनरारोप्य मृत्पूर्णपात्रे संसिच्य वारिणा ॥ ९ ॥

गृहेप्यामन्त्रणं कुर्यात्पूर्वोक्तविधिना बुधः ।

अधिवासनविधिः ।

सायाह्नसमये प्राप्ते विदध्याद्धिवासनम् ॥ १० ॥

आहृत्य यागवस्तूनि कृतस्नानादिसत्क्रियः ।

यथाविधि समभ्यर्च्य[2] सू[3]र्यशङ्करपावकान् ॥ ११ ॥

शिवस्य व्रताङ्गद्रव्यनिवेदनविधिः ।

पश्चिमे देवदेवस्य तस्य मूलं मृदान्वितम् ।

सद्योजातेन मन्त्रेण ददीत हृदयेन वा ॥ १२ ॥

---

१. भववाक्येन ईश्वरवाक्येन । २. यथाविधि समभ्यर्च्येति पवित्रकविधानेन क्रमेण शिवमर्चयेदिति वक्ष्यमाणत्वात् अत्र दमनोत्सवेऽपि मण्टपपूजा द्वारद्वारपालदिक्पालादिपूजा शिवहस्तादिकरणं इत्यादि सर्व मनुसन्धेयम् । ३. सूर्यशङ्करपावकानित्यत्र शङ्करशब्देन कुम्भस्थशिवः मण्डलस्थशिवः स्वेष्टलिङ्गस्थशिवश्च विवक्षितः । अनन्तरं दमनकस्य पवित्रस्येव अधिवासनसंस्कारं सम्पातसंस्कारं च कुर्यादिति शेषः ।

वामेन शिरसा वापि नाळं धात्रीं तथोत्तरे ।
दक्षिणे भस्म पत्रं च शिखया रूपिणाऽथवा ॥ १३ ॥

पुंसा वा वर्मणा प्राच्यां सपुष्पं दन्तधावनम् ।
फलं मूलेन गायत्र्या ऐशान्यां गन्धसंयुतम् ॥ १४ ॥

गन्धदमनारोपणविधिः ।

पञ्चाङ्ग[1]मञ्जलौ कृत्वा दामं पुष्पाक्षतान्वितम् ।
विज्ञापयेज्जगन्नाथं दमनारोहणं प्रति ॥ १५ ॥

आमन्त्रितोऽसि देवेश प्रातः काले मया प्रभो ।
कर्तव्यं तु यथालाभं पूर्णं पर्व तवाज्ञया ॥ १६ ॥

इति विज्ञाप्य देवेशं मस्तके कुसुमाञ्जलिम् ।
संयोज्य मूलमन्त्रेण विदधीत जपादिकम्[2] ॥ १७ ॥

अवशिष्टसंस्कृतदमनरक्षा ।

शेषं पात्रे[3] विनिक्षिप्य द्वितीयेना[4]पिधाय तम् ।
पवित्रकविधानेन कवचेनाऽवकुण्ठयेत् ॥ १८ ॥

एवं सुरक्षितं कृत्वा शिवाय[5] विनिवेदयेत्[6] ।

---

१. पञ्चाङ्गमिति मूलनाळपत्रपुष्पफलसहितमिति भावः । २. जपादिकमिति प्रदक्षिणनमस्कारादि समुच्चीयते । ३. पात्रे पूर्ववत् वंशादिसम्भवे इत्यर्थः । ४. द्वितीयेन अन्येन पात्रेण । ५. शिवाय कलशस्थाय । ६. विनिवेदयेत् रक्षार्थं निवेशयेत् ।

रक्षानन्तरकरणीयविधिः ।

हविष्यान्नं तु भुञ्जीत यदि वा पवनाशनः ॥ १९ ॥
शिवाग्रे जागरं कुर्यात् ध्यानगानजपादिभिः ।

अधिवासाद्द्वितीयदिवसे दमनारोपणविधिः ।

प्रातस्स्नात्वा जगन्नाथ[1]मष्टपुष्प्या विसर्जयेत् ॥ २० ॥
नित्यां नैमित्तिकीञ्चैव पूजां कृत्वा विशेषतः ।
दमनैः पूजयेद्देवं पञ्चाङ्गैरविखण्डितैः ॥ २१ ॥
शेषमञ्जलिनाऽऽदाय दूर्वागन्धाक्षतान्वितम् ।
ध्यायन्नभिमुखं देवं पञ्चवक्त्रं सदाशिवम् ॥ २२ ॥
आत्मविद्याशिवैस्तत्त्वैर्मूलान्तैरीश्वरान्तकैः ।
पवित्रकविधानेन क्रमेण शिवमर्चयेत् ॥ २३ ॥

ओं हां आत्मतत्त्वेश्वराय शिवाय नमः । ओं हां विद्यातत्त्वेश्वराय शिवाय नमः । ओं हां शिवतत्त्वेश्वराय शिवाय नमः । अथ चतुर्थाञ्जलिमन्त्रः ओं हां सर्वतत्त्वेश्वराय शिवाय नमः । ओं हौं मखेश्वराय मखं पूरय पूरय शूलपाणये नमः ।

प्रणम्य शिवमभ्यर्च्य पावकं च वि[2]धानवित् ।
विज्ञापयेच्छिवं भक्त्या वाञ्छितार्थफलप्रदम् ॥२४॥

---

१. जगन्नाथं स्वेष्टलिङ्गसंस्थमिति शेषः । २. विधानवित् अन्तर्बल्यादि गृह्यते. ।

भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ।
सर्वं तदस्तु सम्पूर्णं पर्व दामनकं मम ॥ २५ ॥

आचार्यद्विजादिसन्तर्पणादिः ।

एवं दामविधिं कृत्वा कुर्वीत गुरुपूजनम् ।
परितोष्य हरं पश्चात् द्विजादीनपि तर्पयेत् ॥ २६ ॥
ब्रह्मचारी गृहस्थो वा य इमं कुरुते विधिम् ।
जपपूजादिकं तस्य सफलं चैत्रमासजम् ॥ २७ ॥
परोपकारशीलेन श्रीमता सोमशम्भुना ।
क्रियाकाण्डक्रमावळ्यां दामपूजाविधिः कृतः

——:o:—— ॥ २८–५०७ ॥

प्रायश्चित्तविधिः ।

स्वकीयाऽऽचारलोपेन मानवो यात्यधो यतः ।
तस्योत्तितीर्षया किञ्चित् प्रायश्चित्तं वदेत्ततः ॥ १ ॥
अत्यन्तसरुजे देहे राजचोरभयादिषु[1] ।
गुरुदेवाग्निकार्येषु[2] नित्यहानिर्नदोषकृत् ॥ २ ॥
गृहस्थो[3] ब्रह्मचारी च प्रायश्चित्तं द्विधा भवेत् ।
सकामाकामभेदेन तावेव द्विविधौ स्मृतौ ॥ ३ ॥

---

१. भयादिषु आदिशब्देन अग्निदाहादि गृह्यते । २. गुरुदेवाग्निकार्येषु गुरुदेवाग्निसम्बन्धकार्येषु अग्निसम्बन्धः कार्यश्च कुण्डकरणादिः । ३. गृहस्थो ब्रह्मचारीचेति वानप्रस्थसन्यासिनोरेतयोरन्तर्भावः ।

13

अकामात्तु सकामस्य द्विगुणां शुद्धिमादिशेत् ।
भौतिकात् द्विगुणं ज्ञेयं प्रायश्चित्तं तु नैष्ठिके ॥ ४ ॥

अशीतिर्यस्य वर्षाणि बालो वा प्यूनषोडशः ।
प्रायश्चित्तार्थमर्हन्ति स्त्रियो व्याध्यादिपीडिताः ॥ ५ ॥

तत्राऽपि च परिक्लेशं ज्ञात्वार्धार्धं प्रकल्पयेत् ।
सुदुष्करं स्वयं कर्तुमक्षमादिगुणो यतः ॥ ६ ॥

देशं कालं वयश्शक्तिं जातिं भक्तिं क्रियाक्रमम् ।
सुविचार्य प्रदातव्यं नोपवासो रुजान्विते ॥ ७ ॥

प्रायश्चित्तासमर्थस्य पितृभ्रात्रादिबान्धवैः ।
तद्विभज्य विधातव्यं द्विगुणं त्वपरैर्जनैः ॥ ८ ॥

यथा श्रुतं यथा दृष्टं निबद्धं गुरुभिर्यथा ।
स्वसिद्धान्ताऽविरोधेन तद्विलङ्घ्य विलङ्घनम् ॥ ९ ॥

रात्रौ पूजां च दानं च बुभुक्षुः परिवर्जयेत् ।
विना चन्द्रोपरागार्चां विना सिद्धिं समीहिताम् ॥१०॥

विना प्रदोषपूजां च विना शिवनिशार्चनाम् ।
पूजयित्वा प्रमादेन गायत्र्यष्टशतं जपेत् ॥ ११ ॥

मुमुक्षोस्सर्वदा शस्ता शिवपूजा न वार्यते ।
सकृत्सन्ध्याविलोपेन त्वजातस्य शतं जपेत् ॥ १२ ॥

---

१. अजातस्य सद्योजातस्य ।

त्रिकाललोपात् त्रिगुणं सोपवासस्तु कामतः ।
एककालार्चने लुप्ते सहस्रं दक्षिणं जपेत् ॥ १३ ॥
अकामतः कामतस्तु पूर्वोक्तं दक्षिणं स्मरेत् ।
एककालं द्विकालं वा त्रिकालं वार्धरात्रकम् ॥ १४ ॥
उपवाससमोपेतं कर्मलोपे कृते सति ।
त्रि[1]कालं पूजनं येषामेककालमथाऽपि वा ॥ १५ ॥
प्रायश्चित्तं समं तेषां न न्यूनं नाधिकं भवेत् ।
द्वितीयदिनमारभ्य बहुरूपसहस्रकम् ॥ १६ ॥
त्रिशतोत्तरया वृद्ध्या वर्धयेत्प्रतिवासरम् ।
विलोपे वर्षपूजाया जपेद्घोरायुतद्वयम् ॥ १७ ॥
द्व्ययुतोत्तरया वृद्ध्या मासे मासे समावधिः ।
स्वेष्टलिङ्गे परि[2]भ्रष्टे नष्टे द[3]ग्धे हृ[4]तेऽपि वा ॥ १८ ॥
नीते वा मूषिकाद्यैश्च काककौलेयवानरैः ।
जप्त्वा लक्षमघोरस्य विधिना लिङ्गकान्तरम् ॥ १९ ॥
प्रतिष्ठाप्य भवेच्छुद्धिः पिण्डिकायां तथैव च ।
सहस्रं लु[5]ण्ठिते लिङ्गे द्विगुणात्प[6]रिवर्तिते ॥ २० ॥

---

१. त्रिकालं पूजनं इति एककालार्चनलोपस्य द्वितीयादिकालार्चनालोपस्य च प्रायश्चित्तसाम्यमनेनोच्यते । २. परिभ्रष्टे देशक्षोभादिनेति शेषः । ३. दग्धे सर्वात्मना दग्धे । ४. हृते चोरैरिति शेषः । ५. लुण्ठिते एकपार्श्वेन निवेशनं कम्पो वा । ६. परिवर्तिते ऊर्ध्वाधोविपर्ययेण सर्वतो भ्रमिते ।

शुद्धि[1]श्श्वभ्रच्युते लक्षात् त्रिचतुर्लुण्ठितेऽयुतात् ।
गड्डुकाद्यभिघाते तु शुद्धिस्स्यादयुतद्वयात् ॥ २१ ॥
अघोरस्याऽयुतेनैव लघुघाते विशुध्यति ।
[2]साधारे पतिते लिङ्गे ताले तालेऽयुतं जपेत् ॥ २२ ॥
द्विगुणं तु निराधारे कल्प्यं न्यूनाधिकं ततः ।
अकामतो यदा लिङ्गं च्युतं पुरुषमानतः ॥ २३ ॥
विशीर्णे सर्वभावेन प्रायश्चित्तं तदा नहि ।
अस्यार्थोऽयं श[3]लाकाया भेदे पापं महत्तरम् ॥ २४ ॥
जायतेऽतोत्र कर्तव्यो न प्रमादो हि कर्हिचित् ।
अघोरादपरो नास्ति महापापविनाशनः ॥ २५ ॥
त्रि[4]गुणोतस्स जप्तव्यो महापापापनुत्तये ।
कामतस्तु यदा लिङ्गं विशीर्णं परितो भवेत् ॥ २६ ॥
प्रायश्चित्तं न तस्याऽस्ति इति सत्यं तदा वचः ।
लिङ्गे पादेन संस्पृष्टे लङ्घिते वाऽयुतद्वयम् ॥ २७ ॥
पादलग्नजलस्पृष्टे अघोरस्याऽयुतं जपेत् ।
श्लेष्मणोपहते लिङ्गे यदि वा श्लेष्मवारिणा ॥ २८ ॥

---

१. **श्वभ्रच्युते** बहुशो लुण्ठनपरिवर्तनादिना अष्टबन्धजरणाद्वा पीठश्वभ्राच्च्युते गळिते इत्यर्थः । २. **साधारे** आधारशब्देन लोहकाष्ठादिविरचितं लिङ्गनिवेशनाधिकरणं विवक्षितं पर्यङ्कमिति यावत् । ३. **शलाकाया** लिङ्गस्य । ४. **त्रिगुणोत्तस्स** इति त्रिलक्षसंख्ययेति भावः ।

त्र्ययुतं चाऽयुतं चास्य क्रमेण परिवर्तयेत् ।
मूत्रोदकेन[1] संस्पृष्टे जपेत्सार्धायुतद्वयम् ॥ २९ ॥
रक्तमूत्ररजश्शुक्लदूषितेऽयुतपञ्चकम् ।
तत्संयुक्तोदकस्पर्शात् पादहीनं जपेदिमम् ॥ ३० ॥
लक्षं तु विष्ठया स्पृष्टे पादहीनं तदम्भसा ।
तद्वन्निर्माल्यगर्तेऽपि पतनाच्छुद्धिमाचरेत् ॥ ३१ ॥
विष्ठागर्तनिपाते तु लक्षमर्धाधिकं जपेत् ।
शिवसंस्कारहीनैस्तु स्पृष्टे लिङ्गे द्विजादिभिः ॥ ३२ ॥
क्रमाज्जपेदघोरस्य वृद्ध्यैकोत्तरया शतम् ।
स्पृष्टे दशसहस्राणि नटकैवर्तकादिभिः ॥ ३३ ॥
स्पृष्टे काकादिवर्गेण प्रजपेदयुतद्वयम् ।
अघोरस्यायुतैर्बाणैः[2] वीक्षिते श्वपचादिभिः ॥ ३४ ॥
स्पृष्टे तु द्विगुणैरेभिः शिवलिङ्गं विशुद्ध्यति ।
वामदक्षिणमार्गस्थैः स्पृष्टे लिङ्गेऽयुतं जपेत् ॥ ३५ ॥
यावत्सत्सन्निधिस्तावत् चलनं तन्न युज्यते ।
✓ लक्षं तु स्थिरमुन्मूल्य स्थापयेच्च तदेव हि ॥ ३६ ॥
✓ व्यङ्गितं[3] दग्धविच्छायं[4] सेवितं श्वपचादिभिः ।
पतितं घोरगर्तादौ हृतं राजादिभिर्यदा ॥ ३७ ॥

---

१. मूत्रोदकेन मूत्रसंयुक्तोदकेन । २. बाणैः पञ्चसंख्यैः । ३. व्यङ्गितं विकलाङ्गम् । ४. दग्धविच्छायं दग्धावशिष्टत्वेन कान्तिहीनम् ।

परित्यजेत्तदा लिङ्गं जप्त्वाऽघोरं दशायुतम् ।
लिङ्गान्तरं प्रतिष्ठाप्य विशुद्धिमधिगच्छति ॥ ३८ ॥
निर्वाणे[1] सशिवे वह्नौ त्रिरात्रं समुपोषितः ।
जपेद्दशसहस्राणि होमलोपे तु नित्यवत् ॥ ३९ ॥
निर्वाणे रक्षिते तस्मिन्नेकरात्रमुपोषितः ।
सहस्रं बहुरूपस्य जपेद्दोषापनुत्तये ॥ ४० ॥
सन्ध्यात्रयपरिभ्रष्टः शिवैकादशिनीत्रयम् ।
जप्त्वा विशुद्धिमाप्नोति स्नानहीनश्च[2] तां जपेत् ॥४१॥
पर्वण्यपूजिते देवे गुरौ वह्नौ च भक्तितः ।
अदत्वा च बलिं तत्र शिवस्याष्टशतं जपेत् ॥ ४२ ॥
वृतस्य[3] च क्रियायाश्च[4] नियमस्य[5] च लोपने ।
गायत्र्यष्टशताभ्यासाद्विशुद्धिमधिगच्छति ॥ ४३ ॥
विलोपे सति पूजायाश्चतुर्दश्यादिपर्वसु ।
निर्दिष्टं देवदेवेन प्रायश्चित्तं चतुर्गुणम् ॥ ४४ ॥
आषाढादित्रये दैवादविधाय पवित्रकम् ।
लक्षद्वयमघोरस्य जप्त्वा चान्द्रायणं चरेत् ॥ ४५ ॥

---

१. **निर्वाणे** शान्ते । २. **स्नानहीनः** । वारुणस्नानहीनः । ३. **वृतस्य** कृष्णाष्टम्यादिव्रतस्य । ४. **क्रियायाः** प्रदक्षिणादिक्रियायाः । ५. **नियमस्य** स्वयं कल्पितस्य तैलाभ्यङ्गताम्बूलादिवर्जनरूपस्य यावकाशनादिरूपस्य वा ।

अधो विसर्जिते पात्रे[1] भग्ने चापि विवर्तिते ।
शतद्वयात्सहस्राच्च तदर्धाच्च शुचिः क्रमात् ॥ ४६ ॥
अक्षसूत्रापराधे[2] तु शुद्धिर्लिङ्गोक्तवत्ततः ।
लिख्यतेऽथविशेषोऽपि यो दृष्टः पारमेश्वरे ॥ ४७ ॥
सूत्रके तु नवे च्छिन्ने सहस्रं[3] परिवर्तयेत्[4] ।
शतं तु जीर्णके सूत्रे हस्तभ्रंशात्तथा शतम् ॥ ४८ ॥
अक्षमालां कराद्भ्रष्टां क्षाळयेद्गन्धवारिणा ।
गायत्र्याश्शतजप्तेन सर्वत्रैष विधिस्स्मृतः ॥ ४९ ॥
घण्टायामपराधे तु लिङ्गोक्ताष्टमभागतः ।
प्रायश्चित्तं विधातव्यं दत्तमागमवेदिनाम् ॥ ५० ॥
पूजोपकरणं किञ्चित्स्पृष्ट्वा पीठादिकं पदा ।
शतद्वयमघोरस्य कामतस्त्वयुतं जपेत् ॥ ५१ ॥
बालाबलानां वृद्धानामातुराणां च पादतः ।
प्रायश्चित्तं विधातव्यं यदि भक्त्या सदाशिवे ॥ ५२ ॥
शिवैकाहितचित्तानामाचार्याणां[5] च सर्वदा ।
लोकसंव्यवहारार्थं प्रायश्चित्तं प्रकीर्तितम् ॥ ५३ ॥

---

१. पात्रे अर्घ्यपात्रादिपात्रे । २. अक्षसूत्रापराधे तु इति सहस्रं लुण्ठिते इति पूर्वोक्तश्लोकोऽनुसन्धेयः । ३. सहस्रं अघोरस्येति शेषः । ४. परिवर्तयेत् जपेत् । ५. शिवैकाहितचित्तानां योगिनां पापस्पर्शाभावेऽपि लोकसंव्यवहारार्थमिति भावः ।

केशामिषादिकीटादिदुष्टनैवेद्यदर्शने[1] ।
अघोरस्यायुतं कामादकामात्तु शतं जपेत् ॥ ५४ ॥
नित्यनैवेद्यमानस्य ह्रासे घोरशतद्वयम् ।
प्राण्यङ्गधूपदाने च पञ्चमस्य[2] शतं जपेत् ॥ ५५ ॥
पादेनाऽकामतस्स्पृष्ट्वा गुरुं[3] देवं शिवाऽऽगमम् ।
द्व्ययुतं घोरमन्त्रस्य कामतष्षड्गुणं जपेत् ॥ ५६ ॥
महेशगुरुचण्डाज्ञाभङ्गे लक्षमुदीरितम् ।
एतदर्थार्जितद्रव्यभक्षणात्पादवर्जितम्[4] ॥ ५७ ॥
निर्माल्यभक्षणे[5]ऽघोरलक्षजापेन शुध्यति ।
भक्षणेन समं दानं स्यात्तदर्धमुपेक्षणे ॥ ५८ ॥
अथ वा भक्षणे कामात् प्रजपेद्ब्रह्मपञ्चकम् ।
यावत्सहस्रमत्यर्थं कामतो दीक्षया शुचिः ॥ ५९ ॥
निर्माल्यं लङ्घयित्वा तु दक्षिणस्यायुतं जपेत् ।
लङ्घनेन समस्स्पर्शस्समौ भक्षणविक्रयौ ॥ ६० ॥

---

१. नैवेद्यदर्शने इति नैवेद्यनिवेदने इति भावः । दर्शनादेव तेषामभ्यवहारात् । २. पञ्चमस्य शतं ईशानमन्त्रं शतसंख्ययेत्यर्थः । ३. गुरुं देवं गुर्वधिकरणं देवम् । ४. पादवर्जितं पादेन पञ्चविंशत्या-वर्जितं लक्षं जपेत् । ५. निर्माल्यभक्षणे चण्डद्रव्यभक्षणे न तु बहिः क्षिप्तस्य तस्य बहुप्रायश्चित्तत्वश्रुतेः । अपि चान्धकूपादौ प्रक्षिप्तस्य तस्य भक्षणासम्भवाच्च ।

देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ।
चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं स्मृतम् ॥६१॥

ग्रामादीशस्य देवस्वं देवद्रव्यं पटादिकम् ।
नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं निवेदितम् ॥ ६२ ॥

चण्डद्रव्यं तु यद्दत्तं निर्माल्यं प्रेरितं बहिः ।
पिण्डिकासक्तनिर्माल्यं बहिरेव विसर्जयेत् ॥ ६३ ॥

क्रव्यादो[1] जायते दानात् मातङ्गस्तस्य भक्षणात् ।
लङ्घने सिद्धिहानिश्च गन्धोपादानतो वृकः ॥ ६४ ॥

चण्डालस्त्वयथादाहे[2] विक्रये शबरो भवेत् ।
स्पर्शने जायते स्त्रीत्वं निर्माल्यस्य न संशयः ॥६५॥

यन्निर्माल्येन संस्पृष्टं तद्भुजा पुरुषेण वा ।
पादोनं तत्र पूर्वोक्तं स्पर्शलङ्घनभक्षणैः ॥ ६६ ॥

अनुषङ्गप्रविष्टं यत् चन्दनादि प्रमादतः ।
तन्निर्माल्यचतुर्थांशं विद्धि लिङ्गादिदामसु ॥ ६७ ॥

गुरुपुस्तकनागानां[3] वह्नेर्योगिगणस्य च ।
पार्वतीयक्षमातृणां न निर्माल्यं शिवे[4] यथा ॥ ६८ ॥

---

१. क्रव्यादो जायते सृगालो भवति । २. अयथादाहे पवित्रित-शिवाग्निव्यतिरिक्ताग्नौ यः प्रक्षेपः तस्मिन् सति । ३. गुरुपुस्तकनागानामिति गुरुशब्देन गुरुपाङ्क्तिरुच्यते । ४. शिवे घटितलिङ्गस्थे इति शेषः ।

रत्नलोहादिलिङ्गेषु चले चित्रे प्रतीक्षणे ।
गुरुष्वपि न निर्माल्यं व्याख्यासु प्रतिमासु च ॥६९॥

पूजायामन्नधूपादिगन्धो दीपप्रभापि च ।
नदीप्रवाहनिर्माल्यं न दुष्यति कदाचन ॥ ७० ॥

सद्यः प्रतिष्ठिते लिङ्गे चले वा यदिवाऽचले ।
चतुर्थकर्मपर्यन्तं निर्माल्यादि न दुष्यति ॥ ७१ ॥

पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥ ७२ ॥

अनिवेद्य प्रभुञ्जानः प्रायश्चित्ती भवेन्नरः ।
शिवाष्टशतजापेन पूजया च विशुध्यति ॥ ७३ ॥

देवतानां प्रतिष्ठासु तटाकारामपर्वसु ।
भुक्त्वा पञ्चशतं जप्त्वा पञ्चमस्य विशुध्यति ॥ ७४ ॥

पुंसवने चतुर्थ्यां च भुक्त्वा वामशतं जपेत् ।
द्वादशैकादशाहे[1] तु दक्षिणस्य शतत्रयम् ॥ ७५ ॥

गणान्नं[2] गणकान्नं[3] च सन्यस्तान्नं तथैव च ।
भुक्त्वान्नं भोजकान्नं च वृतं चान्द्रायणं चरेत् ॥७६॥

---

१. द्वादशैकादशाहे तु सपिण्डीकरणे एकोद्दिष्टेचेत्यर्थः । २. गणान्नं यस्तु जीवति चौर्येण गोसुवर्णापहारकः । ब्रह्मस्वं हरते यस्तु स विप्रो गण उच्यते ॥ इति गणलक्षणम् । ३. गणकान्नं या तु भर्तरि मृते चौर्यजातं गर्भं निस्सारयति सा गणकेति कथ्यते ।

पाकादियज्ञगोदानचौळोद्वाहव्रतेषु च ।
तथा स्वाचारवर्णानां भुञ्जानोऽन्नं न दुष्यति ॥७७॥
योन्नं नाऽऽमन्त्रितो भुङ्क्ते यस्य वर्णस्य दीक्षितः ।
तज्जातीशस्वजातीशौ जप्त्वैकत्र विशुध्यति ॥ ७८ ॥
एको द्वौ च त्रयश्चैव दिवसास्तस्य शुद्धये ।
क्षत्रविट्च्छूद्रजातीनां जपस्यानुक्रमेण तु ॥ ७९ ॥
स्नानं पूजां जपं होमं जीर्णे च परिवर्जयेत् ।
जीर्णे स्नात्वा शतं साष्टं गायत्र्याः परिवर्तयेत् ॥ ८० ॥
दीक्षितेन च वर्णेन समुच्छिष्टेन दीक्षितः ।
उच्छिष्टस्पृष्ट आचम्य स्वजातीशशतं जपेत् ॥ ८१ ॥
तस्मिन्नदीक्षितस्पृष्टे स्नात्वाऽऽचम्य शतद्वयम् ।
सामीप्ये दीक्षिते तद्वदुपवासोऽप्यदीक्षिते ॥ ८२ ॥

---

१. **पाकादियज्ञे** आदिग्रहणात् हविर्यज्ञसोमसंस्थानां ग्रहणम् । **गोदाने** ब्रह्मचारिभिरनुष्ठेये व्रतविशेषे । २. **व्रतेषु** नानाविधेषु व्रतेषु । ३. **एको द्वौ च** क्षत्रियादीनां ब्राह्मणान्नाशने विषये ब्राह्मणानां क्षत्रियाद्यन्ने च विषये अयं प्रायश्चित्तविधिः । ४. **दिवसा** इति उपोष्या इति शेषः । ५. **जीर्णे** निर्माल्यभोजने अथवा जीर्णलिङ्गदर्शने । ६. **उच्छिष्टस्पृष्टे** एतदनन्तरं भोजनं त्यक्त्वा इत्यध्याहार्यम् । तदुक्तं श्रीमत्कालोत्तरे—"सर्वेषां तुल्यजातीनामुच्छिष्टस्पर्शने सति । त्यक्त्वा भोजनमाचम्य स्वजातीशशतं जपेत्" इति । ७. **सामीप्ये** समीपे भवं सामीप्यं ब्राह्मणस्य क्षत्रियः, क्षत्रियस्य वैश्यः, वैश्यस्य शूद्रः समीपस्थो भवतीत्यर्थः । ८. **तद्वत्** अदीक्षितस्वजातिस्पर्शवत् स्नानपूर्वं शतद्वयं जपेदित्यर्थः ।

वैश्यशूद्रौ द्विजस्स्पृष्ट्वा समुपोष्य द्व्यहं त्र्यहम् ।
तज्जातीशस्वजातीशावेकीकृत्य जपेत्क्रमात्[1] ॥ ८३ ॥

क्षत्रियश्शूद्रसम्पर्के तौ[2] जपेत् द्विरुपोषितः ।
एताव(न)दीक्षितस्स्पृष्ट्वा पूर्वोक्तं द्विगुणं चरेत् ॥ ८४ ॥

पादहीनं भवेद्राजा वैश्योऽर्धेन विवर्जितम् ।
पादत्रयोचितं शूद्रः द्विजस्पर्शात्तदेव हि ॥ ८५ ॥

शूद्रस्तु क्षत्रियस्पर्शे क्षत्रोक्तार्धेन शुध्यति ।
अन्यत्राप्येवमालोच्य प्रायश्चित्तं वदेद्बुधः ॥ ८६ ॥

स्वजातीशायुतं जप्त्वा दिनत्रयमुपोषितः ।
अन्त्यजेन[3] सहस्पर्शे विशुद्धो जायते नरः ॥ ८७ ॥

जाते चण्डालसम्पर्के दक्षिणस्याऽयुतत्रयम् ।
जप्त्वा कृच्छ्रमनुष्ठाय मुष्णाति सकलं मलम् ॥ ८८ ॥

पुरुषाघोरवामाजा जातीशा ब्राह्मणादिषु ।
साधारणोऽप्यघोरस्तु ईशस्साधारणस्मृतः ॥ ८९ ॥

उपवासं प्रकुर्वीत स्वजात्युच्छिष्टभक्षणे ।
सामीप्योच्छिष्टभुक्तस्तु जपेदपि सहस्रकम् ॥ ९० ॥

---

१. क्रमादिति चतुश्शतवृद्धिक्रमेणेत्यर्थः । २. तौ स्वजातीश-तज्जातीशौ । ३. अन्त्यजेन रजकादिना ।

भुक्त्वा वैश्यस्य शूद्रस्य समुच्छिष्टं द्व्यहं त्र्यहम् ।
क्रमेणोपवसेद्विप्रः तथाघोरायुतं जपेत् ॥ ९१ ॥

द्विधापि[1] सूतके भुक्त्वा समुपोष्य विशुद्ध्यति ।
वामस्य तु सहस्रेण कामात्तु द्विगुणं चरेत् ॥ ९२ ॥

भुक्त्वा तत्र स्वकीये च सहस्रं दक्षिणं जपेत् ।
उपवाससमोपेतं कामात्तु द्विगुणं त्रिभिः ॥ ९३ ॥

कारुदासीनरेन्द्राणां सूतको नैव विद्यते ।
निर्वाणदीक्षितानां तु पृथक्पाकभुजां न तत् ॥ ९४ ॥

मत्स्यकर्कटशम्बूकान्[2] भुक्त्वा नख(कपर्दनम्) ।
पीत्वा नवाम्बुचो[3]पोष्य पञ्चगव्येन शुद्ध्यति ॥ ९५ ॥

पीतशेषं तु यत्तोयं प्रमादाद्यदि यः पिबेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ॥ ९६ ॥

पीयमानपतत्तोयजुष्टमन्नमदन्नरः ।
सहस्रं रूपिणो जप्त्वा पञ्चगव्येन शुद्ध्यति ॥ ९७ ॥

---

१. द्विधाऽपि सूतके इति शावसूतिकानिमित्तभेदेन द्विप्रकारे सूतके । २. शम्बूकशब्देन क्षुद्रशङ्ख उच्यते । ३. नवाम्बुचेति नूतनकूपादुद्धृतं वारि । तदुक्तं—अजा गावो महिष्यश्च ब्राह्मणी या प्रसूतिका । दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम् । इति ।

जमन्[1] गुदेन्द्रियस्रावे शौचस्नानेप्यथ द्विधा[2] ।
आचाममाचरेद्घोरं सहस्रं च जपेदभुक् ॥ ९८ ॥

अनाचान्तः पिबेत्तोयं भक्षयेदथ मूत्रयेत् ।
जप्त्वाघोरं निराहारः पञ्चगव्येन शुद्ध्यति ॥ ९९ ॥

विना यज्ञोपवीतेन पिबेद्भुञ्जीत वा यदि ।
जप्त्वाघोरं[3] निराहारः पञ्चगव्यं पिबेत्तदा ॥ १०० ॥

सङ्करेषु च सर्वेषु चेतसश्शुद्धिकारणम् ।
अघोरमन्त्रो जप्तव्यो यावच्चित्तं प्रसीदति ॥ १०१ ॥

अहन्यहनि योऽधीते विधिस्थाश्शिवसंहिताम् ।
स हन्ति सर्वपापानि तामिस्रमिव भास्करः ॥ १०२ ॥

उपवासद्वयं कुर्यात् प्रायश्चित्तेऽयुतेऽयुते ।
होमं दशांशतो दद्यात् विंशांशं गडुकां जपेत् ॥ १०३ ॥

भूशय्यो ब्रह्मचारी च वितैलस्सत्यवाग् भवेत् ।
नक्तं हविष्यभुग् यावत् प्रायश्चित्तं समाप्यते ॥ १०४ ॥

---

१. जमन् जमुअदने भ्वादिः भुञ्जान इत्यर्थः । २. द्विधेति द्विधाऽऽचाममाचरेदित्यन्वयः शौचस्नानानन्तरं एकाचमनं पुनस्स्नानानन्तरं द्वितीयमाचमनं इत्यतस्स्नानस्याऽपि द्वैविध्यमर्थात्सिद्धम् । ३. जप्त्वाऽघोरं निराहारः इति सहस्रमित्यनुवर्तते ।

मध्ये पूर्वाद्युदीच्यन्ते न्यसेत्कोष्ठकपञ्चके ।
शिवं सदाशिवं विद्यां कालं च पुरुषं क्रमात् ॥१०५॥

सुप्रतिष्ठं सुशान्तं च तेजोवदमृतात्मकम् ।
रत्नोदकं च पञ्चामृतं च पात्राणि रोपयेत् ॥ १०६ ॥

गोमयं गोजलं सर्पिर्दधिक्षीरं च पञ्चमम् ।
प्रतीच्यामुत्तरे याम्ये पूर्वे मध्ये क्षिपेत्क्रमात् ॥ १०७ ॥

सद्योजातेन वामेन रूपिणा पुरुषेण च ।
ईशानेन यथासंख्यं गोमयाद्यभिमन्त्रयेत् ॥ १०८ ॥

पूर्वे पूर्वं क्षिपेदत्र मूलमन्त्रमुदीरयन् ।
कुशोदकं तु गायत्र्या तेन संहितयाऽथवा ॥ १०९ ॥

पञ्चगव्यमिति प्रोक्तं महापातकनाशनम् ।
गोमयस्यार्धमङ्गुष्ठं गोमूत्रं पलसंयुतम् ॥ ११० ॥

पलद्वयं घृतस्योक्तं मानं दध्नः पलत्रयम् ।
पलानि पञ्च दुग्धस्य कुशाम्बु पलमात्रकम् ॥१११॥

कृष्णाया गोमयं मूत्रं नीलायाः कपिलाघृतम् ।
सुरभेर्दधि शुक्लायास्ताम्रायाः क्षीरमाहरेत् ॥ ११२ ॥

अभावे सर्ववर्णानां कपिलैका प्रशस्यते ।
स्वर्णरौप्यपलाशानां पात्रं ताम्रस्य वा शुभम् ॥११३॥

पञ्चगव्यविधानेन शिवकूर्चमिदं स्मृतम् ।
मूलस्याष्टशताल्लब्धं पिबेदेकत्र योजितम् ॥ ११४ ॥

सञ्जातमिव तूलस्य समिद्ध(इव) पावकः ।
शिवकूर्चो दहत्याशु पापानि सुमहान्त्यपि ॥ ११५ ॥

यथा शास्त्रोपदिष्टन्तु प्रायश्चित्तं वदेद्बुधः ।
न्यूनाधिकप्रदानेन देशिको नरकं व्रजेत् ॥ ११६ ॥

क्रियाकाण्डक्रमावळ्यां श्रीमता सोमशम्भुना ।
महाप्रभावस्स्वल्पोऽपि प्रायश्चित्तविधिःकृतः
॥ ११७–६२४ ॥

इति क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
प्रायश्चित्तविधिः सम्पूर्णः ।



॥ श्रीः ॥

# समयदीक्षाविधिः ।

अथातो भोगमोक्षार्थं दीक्षारूपनिरूपणम् ।
यथाऽऽगमं यथाबोधं संक्षेपादभिधीयते ॥ १ ॥

दीक्षास्वरूपविधिः ।

मलमायादिपाशानां विश्लेषः क्रियते यया ।
ज्ञानञ्च जन्यते शिष्ये सा दीक्षेत्यभिधीयते ॥ २ ॥

दीक्षाऽनुग्राह्याऽऽत्मभेदः ।

विज्ञानाकलनामैको द्वितीयः प्रळयाकलः ।
तृतीयस्सकळश्शास्त्रेऽनुग्राह्यस्त्रिविधो मतः ॥ ३ ॥
तत्राऽऽद्यो मलमात्रेण युक्तोऽन्यो मलकर्मभिः ।
कलादिभूमिपर्यन्ततत्वैस्तु सकळो युतः ॥ ४ ॥

निराधारसाधारदीक्षापदार्थः ।

निराधारा च साधारा दीक्षा तु द्विविधा मता ।
निराधारा द्वयोस्तेषां साधारा सकळस्य तु ॥ ५ ॥
आचार्यनिरपेक्षेण क्रियते शम्भुनैव या ।
तीव्रशक्तिनिपातेन निराधारेति सा स्मृता ॥ ६ ॥
आचार्यमूर्तिमास्थाय मन्दतीव्रादिभेदतः ।
शक्त्या यां कुरुते शम्भुः सा साऽधिकरणोच्यते ॥७॥

15

इयं चतुर्विधा प्रोक्ता सबीजा बीजवर्जिता ।
साधिकारा निरधिकारा यथावदभिधीयते ॥ ८ ॥
समयाऽऽचारसंयुक्ता सबीजा जायते नृणाम् ।
निर्बीजात्वसमर्थानां समयाऽऽचारवर्जिता ॥ ९ ॥
नित्ये नैमित्तिके काम्ये यस्य स्यादधिकारिता ।
साधिकारा भवेद्दीक्षा साधकाचार्ययोरतः ॥ १० ॥
निर्बीजा दीक्षितानां तु तथा समयिपुत्रयोः ।
नित्यमात्राधिकारित्वाद्दीक्षा निरधिकारिका ॥ ११ ॥
द्विविधेयं द्विरूपापि प्रत्येकमुपजायते ।
एका क्रियावती तत्र कुण्डमण्डलपूर्विका ॥ १२ ॥
मनोव्यापारमात्रेण या सा ज्ञानवती मता ।
इत्थं लब्धाऽधिकारेण दीक्षाऽऽचार्येण साध्यते ॥१३॥

आचार्यलक्षणम् ।

सच सं[1]द्देशसम्भूतस्सु[2]मूर्तिश्श्रु[3]तशीलवान् ।
ज्ञा[4]नाऽऽचारगुणोपेतः क्षमी शुद्धाऽऽशयो वरः ॥१४॥

---

१. सद्देशसम्भूतः । यदाहुः "कृष्णसारमृगो यत्र स्वभावाद्विचरेद्भुवि । सन्ति देवास्तथा वेदा आर्यावर्तं विदुर्बुधाः । तद्देशकुलसम्भूत आचार्यश्शास्त्रसम्मतः" इति । २. सुमूर्तिः दन्तुरादिदोषरहिता मूर्तिः यस्य सः । ३. श्रुतशीलवान् श्रुतमागमश्रवणं शीलं च शठक्रूरादिदोषरहितत्वम् । ४. ज्ञानाचारगुणोपेतः । ज्ञानं च तत्त्वविज्ञानं आचारः प्रत्यहमाचरतीत्याचारः गुणस्सात्विकः । यदाहुः "ज्ञानं सत्यं दया धैर्यं विनयं स्थैर्यमेव च । सात्विकस्य गुणः प्रोक्तस्सज्ञास्सञ्ज्ञायते तु सः ।"

देशशीलगुणाऽऽचारगुरुभक्तिसमन्वितः ।
शिवानुध्यानवान् शिष्यो विरक्तश्च प्रशस्यते ॥ १५ ॥

द्वारपालार्चनविधिः ।

अथ दीक्षां गुरुः कुर्यात्कृ[1]तनित्यक्रियाद्वयः ।
प्रणवार्घ्यकराम्भोजः कृतद्वाराधिपार्चनः ॥ १६ ॥
विघ्नानुच्चाट्य देहे[2]ळ्यां न्यस्या[3]ऽस्त्रं स्वासने स्थितः ।

द्रव्यशुद्धिः ।

कुर्वीत भूतसंशुद्धिमन्तर्यागं यथोदितम् ॥ १७ ॥
तिलतण्डुलसिद्धार्थकुशदूर्वाङ्कुरोदरम् ।
सयवक्षीरनीरं च विशेषार्घ्यमिदं ततः ॥ १८ ॥
तदम्बुना द्रव्यशुद्धिं ति[4]लकं स्वासनो[5]ऽऽत्मनोः।
पूजनं मन्त्रसंशुद्धिं पञ्चगव्यं च पूर्वगम् ॥ १९ ॥

विकिरकरणीयविधिः ।

लाजचन्दनसिद्धार्थभस्मदूर्वाक्षतान् कुशान् ।
विकिरान् शुद्धलाजान् वा सप्तधाऽस्त्राभिमन्त्रितान् ॥

---

१. कृतनित्यक्रियाद्वयः समाप्तसन्ध्याद्वयकर्मा इत्यर्थः । २. देहळ्यां उदुम्बरे । ३. न्यस्याऽस्त्रमिति रक्षायै इति शेषः । ४. तिलकं निटिले इति शेषः । ५. स्वासनात्मनोः इति आत्मनः सासनस्य सकळस्य शिवस्यचेत्यर्थः ।

अस्त्राम्बुप्रोक्षितानेतान् कवचेनाऽवकुण्ठितान् ।
नानाप्रहरणाऽऽकारान्[1] विघ्नौघविनिवारकान् ॥ २१ ॥

ज्ञानखड्गकरणीयविधिः ।

दर्भाणां तालमानेन कृतां षट्त्रिंशता दळैः ।
सप्तजप्तां शिवाऽस्त्रेण वेणीं बोधासिमुत्तमाम् ॥ २२ ॥

शिवोऽहम्भावना ।

शिवमात्मनि विन्यस्य सृष्ट्वाऽऽत्मानमभीप्सितम् ।
निष्कळञ्च शिवं न्यस्य शिवोऽहमिति भावयेत् ॥२३॥

शरीरालङ्करणविधिः ।

मूलाभिमन्त्रितं श्वेतमुष्णीषं[2] शिरसि न्यसेत् ।
अलङ्कुर्यान्निजं देहं गन्धैर्वस्त्रैर्विभूषणैः ॥ २४ ॥

शिवहस्तारोपणविधिः ।

गन्धैर्मण्डलकं[3] स्वीये विदध्याद्दक्षिणे करे ।
विधिनाऽत्रार्चयेदीशमित्थं स्याच्छिवहस्तकम् ॥ २५ ॥

---

१. नानाप्रहरणाकारान् नानाविधायुधाकारान् । २. उष्णीषमिति तथाचोक्तं दीप्ते "स्थापने प्रोक्षणे यागे वह्निकार्ये जपे तथा । उष्णीषमुत्तरीयं च धारयेत्तु शिवद्विजः । सितं सूक्ष्मं च सुश्लक्ष्णं सदशं चाष्टहस्तकम् । पञ्चभागैकविस्तारं सप्तभागमथाऽपि वा । एकद्वित्रिक्रमान्मौळेः परितः परिवेष्टयेत् । तस्याग्रं दक्षिणे कर्णे बन्धयेत्तु विचक्षणः" । ३. गन्धैर्मण्डलकं स्वीये इति । आत्मनो दक्षिणे हस्ते गन्धं विलिप्य मण्डलाकारं कुर्यादित्यर्थः ।

तं न्यस्य शिवमन्त्रेण भास्वरं निजमस्तके ।
शिवादभिन्नमात्मानं कर्तारं भावयेद्यथा ॥ २६ ॥

मण्डले कर्मणां साक्षी कलशे यज्ञरक्षकः ।
होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः ॥ २७ ॥

स्वात्मन्यनुगृहीतेति पञ्चाधारोऽयमीश्वरः ।
सोऽहमेवेति कुर्वीत भावं स्थिरतरं गुरुः ॥ २८ ॥

मण्डपस्य विशेषसंस्कारविधिः ।

ज्ञानखड्गकरस्स्थित्वा नैरृत्यामुदगाननः ।
अर्घ्याम्बुपञ्चगव्याभ्यां सम्प्रोक्ष्य मखमण्टपम् ॥ २९ ॥

चतुष्पथान्तसंस्कारैस्संस्कुर्याद्वीक्षणादिभिः ।

संस्कारानन्तरकरणीयविधिः ।

विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत् ॥ ३० ॥

तानीशदिशि वर्धन्या आसनायोपकल्पयेत् ।

वास्तुब्रह्ममहालक्ष्मीपूजा ।

नैरृते[1] वास्तुगीर्वाणं[2] द्वारे लक्ष्मीं प्रपूजयेत् ॥ ३१ ॥

पश्चिमे सुमुखीं रत्नैः पूरयन्तीं मखालयम् ।
ध्यात्वाऽऽवाह्य हृदाभ्यर्च्य स्मरेन्मण्टपरूपिणीम् ॥ ३२ ॥

---

१. नैरृते निरृतिकुम्भपूर्वपदस्थकुम्भे इत्यर्थः । २. वास्तुगीर्वाणमिति द्विपञ्चाशद्देवताधिनाथब्रह्माणम् ।

सपरिवाराशिवकुम्भवर्धनीपूजा ।

अथ रत्नौषधीतोयपूर्णे चन्दनचर्चिते ।
चूतपल्लववक्त्रे च प्रणवेन चलासने ॥ ३३ ॥
ऐशान्यां सर्वधान्यस्थे कलशे पश्चिमानने ।
भूषिते वस्त्रहेमाद्यैस्साङ्गं सम्पूजयेच्छिवम् ॥ ३४ ॥
कुम्भदक्षिणपार्श्वस्थां पश्चिमास्यां सुलक्षणाम् ।
यजेदस्त्रेण सिंहस्थां वर्धनीं खड्गरूपिणीम् ॥ ३५ ॥
दिक्षु शक्रादिदिक्पालान् ब्रह्मविष्ण्ववसानकान् ।
वाहनाऽऽयुधसंयुक्तान् हृदाभ्यर्च्य स्वनामभिः ॥ ३६ ॥

---

१. **रत्नौषधीतोयपूर्णे** इति रत्नौषधीसहिततोयपूर्णे इत्यर्थः । रत्नं च माणिक्यादि यदाहुः "माणिक्यं चेन्द्रनीलं च वैडूर्यञ्च प्रवाळकम् । मुक्ता वज्रं तथा पुष्यरागं स्फटिकखण्डकम् । मरकतं चैव रत्नानां नवकं परिकीर्तितम्"। ओषध्यश्च सहदेव्यादयः यदाहुः "सहदेव्येकपत्रं च भद्रं वैकङ्कतं तथा । विष्णुक्रान्तिश्च पञ्चैते पञ्चौषधमिति स्मृतम्"। इति । २. **प्रणवेने**ति ओं हां वृषभासनाय नमः इति पूजिते इत्यर्थः । ३. **ऐशान्या**मिति ईशानदिक्स्थवेदिकायामित्यर्थः । ४. **सर्वधान्यस्थे** तिलसर्षपमुद्गमाषशिंबकुलुत्थव्रीहिषु तिष्ठतीति तस्मिन् । ५. **यजेदस्त्रेणे**ति पाशुपतास्त्रेणेत्यर्थः । ६. **दिक्ष्वि**ति मण्टपस्याभ्यन्तरप्राच्यादिदिक्ष्वित्यर्थः । ७. **वाहनायुधसंयुक्ता**निति वाहनानि ऐरावतादीनि आयुधानि वज्रादीनि । ८. **हृदाभ्यर्च्ये**ति ओं हां इन्द्राय नमः, ओं हामग्नये नमः, ओं हां यमाय नमः इत्येवमादिभिरित्यर्थः ।

[1]प्रथमं तां समादाय [2]कुम्भस्याग्रानुगामिनीम्।
अविच्छिन्नपयोधारां भ्रामयेत्तां प्रदक्षिणम्॥ ३७॥
[3]शिवाज्ञां लोकपालांस्तान् [4]श्रावयेन्मूलमुच्चरन्।
संरक्षथ यथाभागं कुम्भं [5]धृत्वाऽथ तां धरेत्॥ ३८॥
[6]ततस्स्थिरासनं कुम्भे साङ्गं सम्पूज्य शङ्करम्।
विन्यस्य शोध्य[7]मध्वानं वर्धन्यां चास्त्रमर्चयेत्॥ ३९॥

ओं [8]हां अस्त्रासनाय हुंफण्णमः। ओं [9]हां अस्त्रमूर्तये हुं फण्णमः। ओं ह्रीं पशूं हुंफट् अस्त्राय हुंफट् नमः। ओं हां हृदयाय हुंफण्णमः। ओं श्लीं शिरसे हुंफण्णमः। ओं [10]वं शिखायै हुंफण्णमः। ओं [11]शूं कवचाय हुंफण्णमः। ओं हूं फट् अस्त्राय हुंफण्णमः।

---

१. प्रथमं तां समादायेति वर्धनीमन्येन वाहयित्वा गुरुश्शिवकुम्भं ओं नमस्सर्वात्मकायेति पद्यं पठित्वा समादाय मूलमन्त्रं पठन् भ्रामयेदित्यर्थः। २. कुम्भस्याग्रानुगामिनीमिति शिवकुम्भस्य पुरतो गच्छन्तीमित्यर्थः। ३. शिवाज्ञामिति भो भो शक्र, भो भो अग्ने, भो भो यमेत्यादिपरिपाट्येत्यर्थः। ४. श्रावयेदिति परमेश्वराज्ञया भवद्भिस्सावधानैस्स्थातव्यमित्याज्ञापयेदित्यर्थः। ५. धृत्वाऽथ तां धरेदिति निधाय तां निदधेदित्यर्थः। ६. ततस्स्थिरासनम् इति कुम्भे आधारशक्त्यादि भोगाङ्गान्तपूजां इत्यर्थः। ७. शोध्यमध्वानं शोध्याध्वानमित्यर्थः। ८. ओं हः इति मातृकापाठः। ९. ओं हः इति मातृकापाठः। १०. वमिति फट्शिखायै इति मातृकापाठः। ११. शूमिति ह्रूमिति मातृकापाठः।

कोटिसूर्यप्रतीकाशं प्रळयाम्बुदनिस्वनम् ।
त्र्यक्षं नागोपवीतं च चतुर्वक्त्रं चतुर्भुजम् ॥ ४० ॥

प्रदीप्तदशनप्रान्तदीप्तभ्रूश्मश्रुमूर्धजम् ।
शक्तिमुद्गरशूलासिहस्तं चन्द्रार्धशेखरम् ॥ ४१ ॥

भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ।
अङ्गुष्ठेन स्पृशेत्कुम्भं धृत्वा मुष्ट्या तु वर्धनीम् ॥४२॥

भुक्तये मुक्तये त्वादौ मुष्टिना वर्धनीं स्पृशेत् ।
कुम्भस्य मखरक्षार्थं ज्ञानखड्गं समर्पयेत् ॥ ४३ ॥

साष्टं च मूलमन्त्रस्य शतं कुम्भे निवेदयेत् ।
तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेत्ततः ॥ ४४ ॥

यथेदं कृतयत्नेन भगवन् मखसन्दिरम् ।
रक्षणीयं जगन्नाथ सर्वाध्वरवर त्वया ॥ ४५ ॥

मण्डलेशपूजा ।

प्रणवस्थं चतुर्बाहुं वायव्ये[1] विघ्ननायकम् ।
सम्पूज्य पूजयेन्मध्ये गन्धाम्बुकृतमण्डले ॥ ४६ ॥

स्थण्डिलेशं सविस्तारं पूर्वोक्तविधिना ततः ।

अग्निकार्यविधिः ।

लब्धानुज्ञो व्रजेत्साध्यै कुण्डान्तं मन्त्रतृप्तये ॥ ४७ ॥

---

१. वायव्ये वायुदिक्कुम्भस्य पूर्वपदस्थकुम्भे इत्यर्थः ।

निविष्टो विधिना तस्मिन्नर्घ्यगन्धघृतादिकम् ।
वामे सव्ये तु विन्यस्य समिद्दर्भतिलादिकम् ॥ ४८ ॥

कुण्डवह्निं स्रुचा सिच्य प्राग्वत्संस्कृत्य भावयेत् ।
मुख्यतामूर्ध्ववक्त्रस्य हृदि वह्नेश्शिवं यजेत् ॥ ४९ ॥

स्वमूर्तौ शिवकुम्भे च स्थण्डिलेशाग्निशिष्ययोः ।
सृष्टिन्यायेन विन्यस्य शोध्याध्वानं यथाविधि ॥ ५० ॥

काम्यभेदेनाग्निवक्त्रेषु होमप्रतिपादनम् ।

वक्त्राणामग्निजिह्वानां ज्वालानां च निरूपणम् ।
दृष्टं काम्यविधानेषु प्रसङ्गादभिधीयते ॥ ५१ ॥

कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् ।
पश्चिमे शिष्यसंस्कारं नित्यहोमं समाचरेत् ॥ ५२ ॥

वश्याकर्षणसौभाग्यपुष्टिभाग्याधिरोहणे ।
शान्तिके पाशशुद्धौ च वामे होमः प्रशस्यते ॥ ५३ ॥

गुळिकाञ्जननिस्त्रिंशवादलेपजिगीषया ।
शिष्यसञ्जननार्थं च प्राचीनवदने यजेत् ॥ ५४ ॥

मारणोच्चाटनद्वेषस्तम्भनार्थं तु दक्षिणे ।
प्रायश्चित्तं तु तत्रैव पश्चिमे तु विमुक्तये ॥ ५५ ॥

अग्निजिह्वानां प्रभेदः ।

हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ।
जिह्वाग्नेरतिरक्ता च बहुरूपा च सप्तमी ॥ ५६ ॥
रुद्रेन्द्रवह्निमांसादवरुणानिलगोचरे ।
हिरण्याद्या विनिर्दिष्टा रसनाष्षडनुक्रमात् ॥ ५७ ॥
मध्यतो बहुरूपा तु दक्षिणोत्तरगामिनी ।

हिरण्यादीनां वर्णप्रतिपादनम् ।

हिरण्या तप्तहेमाभा कनका वज्रसप्रभा ॥ ५८ ॥
सुप्रभा मौक्तिकोद्योताऽतिरक्ता पद्मरागवत् ।
चन्द्रकान्तशरच्चन्द्रप्रभेव बहुरूपिणी ॥ ५९ ॥
फलं तु कामभेदेन क्रमादासामुदीर्यते ।

काम्यभेदेन जिह्वाप्रभेदे होमविधिः ।

वश्याकर्षणयोराद्या कनका स्तम्भने रिपोः ॥ ६० ॥
विद्वेषमोहयोरक्ता कृष्णा मारणकर्मणि ।
सुप्रभा शान्तिके पुष्टौ सुरक्तोच्चाटने मता ॥ ६१ ॥
एकैव बहुरूपा तु सर्वकामफलप्रदा ।
अभीष्टवदने तासां जिह्वानामनुपूर्वशः ॥ ६२ ॥

अग्निजिह्वाबीजनिर्देशः ।

बीजानि सप्त होमार्थं लिख्यन्ते तानि तद्यथा ।
विरेफावान्तिमौ (शौ)रेफषष्ठस्वरान्वितौ ॥ ६३ ॥

---

१. ओं यूं, ओ लूं, ओं घूं, ओं शूं, ओं षूं, ओं सूं, ओं हूं इति जिह्वाबीजानि ।

इन्दुबिन्दुशिखायुक्तौ जिह्वाबीजान्यनुक्रमात् ।

## शान्तिकादिहोमेषु क्षीरादिद्रव्यप्रतिपादनम् ।

क्षीरादिमधुरैर्होमं कुर्याच्छान्तिकपौष्टिके ॥ ६४ ॥

आभिचारे तु पिण्या(कं)कसक्तुकम्बुककाञ्चिकैः ।
लवणैराजिकातक्रकटुतैलैश्च कण्टकैः ॥ ६५ ॥

समिद्भिरथ वक्राभिः क्रुद्धो भाष्याणुना यजेत् ।
विद्याधरत्वलाभाय चन्द्रागरुयुतं पुरा ॥ ६६ ॥

अथ वा नागकिञ्जल्कं जुहुयात्साधकोत्तमः ।
कदम्बकलिकाहोमाद्यक्षिणी सिध्यति ध्रुवम् ॥ ६७ ॥

बन्धूककिंशुकादीनि वश्याकर्षाय होमयेत् ।
बिल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकान्यपि ॥ ६८ ॥

पद्मानि चक्रवर्तित्वे भक्ष्यभोज्यादि सम्पदे ।
दूर्वाधिव्याधिनाशाय सर्वशत्रुवशीकृतौ ॥ ६९ ॥

प्रियङ्गुकदळीपुष्पाण्याहृतो जुहुयाद्बुधः ।
विषमज्वरनाशाय चूतपत्राणि होमयेत् ॥ ७० ॥

घृतेन सहसार्द्राणि प्लुतमृत्युञ्जयो यथा ।
अमुकस्य ज्वरं नाशय नाशय ओं जुं सः वौषट् ॥७१॥

जले वरुणमभ्यर्च्य वृष्ट्यर्थं ग्रहसंयुते ।
तिलान् वरुणमन्त्रेण जुहुयाद्बुह्मकेन वा ॥ ७२ ॥

मेघेनाप्लाविताऽशेषदिगन्तधरणीतलम्[1] ।
दारयेत्तिलहोमेन शीघ्रं पाशुपताणुना ॥ ७३ ॥

ओं ग्लीं श्लीं पशूं हुंफट् मेघानाऽऽस्फोटयाऽऽस्फोटय हुंफट् ।

सर्वोपद्रवनाशाय रुद्रशान्त्या तिलाहुतिभिः[2] ।
विधिना यजनं कुर्यादथ प्रस्तुतमुच्यते ॥ ७४ ॥

प्रस्तुतहोमविधिः ।

आहुत्यष्टशतेनेशमङ्गानि तु दशांशतः ।
सन्तर्प्य प्लुतमूलेन दद्यात्पूर्णां यथापुरा ॥ ७५ ॥

तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं यजेत् ।
शतद्वयं च होतव्यं सस्पत्तौ देशकालयोः ॥ ७६ ॥

दुर्निमित्तापनोदाय सुनिमित्तकृते यथा ।
शतद्वयं च होतव्यं मूलमन्त्रेण पूर्ववत् ॥ ७७ ॥

मूलाद्यस्त्रान्तमन्त्राणां स्वाहान्तैस्तर्पणं सकृत् ।
शिखासम्पुटितैर्बीजैर्हुंफडन्तैश्च दीपनम् ॥ ७८ ॥

---

१. धरणीतलादिति मातृकापाठः । २. तिलाहवैरिति सुवचम् ।

ओं हां शिवाय स्वाहेत्यादि तर्पणे । ओं हूं हौं हूं शिवाय हुंफडित्यादि दीपने ।

## दीक्षाङ्गभूतस्थालीपाकविधिः ।

ततश्शिवाम्भसा स्थालीं क्षाळितां वर्मकुण्ठिताम् ।
चन्दनादिसमालिप्तां बध्नीयात्कण्ठमण्डले ॥ ७९ ॥
वर्मास्त्रजप्तसद्दर्भसूत्राभ्यां चरुसिद्धये ।
धर्माद्यैरासने दत्ते साद्रास्त्रकृतमण्डले ॥ ८० ॥
न्यस्तायां मूर्तिभूतायां भावपुष्पैश्शिवं यजेत ।
वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पैर्बहिर्भवैः ॥ ८१ ॥

---

१. शिवाय स्वाहेति तत्रायं प्रयोगः । ओं हां हौं शिवाय स्वाहा। ओं हों ईशानमूर्धाय स्वाहा । ओं हें तत्पुरुषवक्त्राय स्वाहा । ओं हुं अघोरहृदयाय स्वाहा । ओं हिं वामदेवगुह्याय स्वाहा । ओं हं सद्योजातमूर्तये स्वाहा । ओं हां हृदयाय स्वाहा । ओं हीं शिरसे स्वाहा । ओं हूं शिखायै स्वाहा । ओं हैं कवचाय स्वाहा । ओं हौं नेत्रेभ्यस्स्वाहा । ओं हः अस्त्राय स्वाहा इति तर्पणे । २. दीपने इति प्रयोगस्त्वेवं प्रकारतः ओं हूं हौं हूं शिवाय हुंफट् ओं हूं हों हूं ईशानमूर्धाय हुंफट् । ओं हूं हें हूं तत्पुरुषवक्त्राय हुंफट् । ओं हूं हुं हूं अघोरहृदयाय हुंफट् । ओं हूं हिं हूं वामदेवगुह्याय हुंफट् । ओं हूं हं हूं सद्योजातमूर्तये हुंफट् । ओं हूं हां हूं हृदयाय हुंफट् । ओं हूं हीं हूं शिरसे हुंफट् । ओं हूं हूं हूं शिखायै हुंफट् । ओं हूं हैं हूं कवचाय हुंफट् । ओं हूं हौं हूं नेत्रेभ्यो हुंफट् । ओं हूं हः हूं अस्त्राय हुंफट् इति दीपने । ३. वस्त्रबद्धमुखायां वस्त्रवेष्टितमुखायामित्यर्थः ।

चुल्यां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ।
न्यस्तहुङ्कारबीजायां न्यस्तायां कुण्डदक्षिणे ॥ ८२ ॥

[1]धर्माधर्मशरीरायां जप्तायामायुधाणुना ।
स्थालीमारोपयेदस्त्रजप्तगव्याऽऽज्यमार्जितम् ॥ ८३ ॥

गव्यं पयोऽस्त्रसंशुद्धं प्रासादशतमन्त्रितम् ।
[2]तण्डुलं श्यामकादीनां निक्षिपेत्तत्र तद्यथा ॥ ८४ ॥

[3]एकशिष्यविधानाय तेषां प्रसृतिपञ्चकम् ।
प्रसृतिं प्रसृतिं पश्चाद्वर्धयेद्याद्यनुक्रमात् ॥ ८५ ॥

कुर्वंश्चामलमस्त्रेण पि[4]धानं कवचाणुना ।
शिवाग्नौ मूलमन्त्रेण पूर्वास्यश्चरुकं पचेत् ॥ ८६ ॥

सुस्विन्ने तत्र तच्चुल्यां स्रुवमापूर्य सर्पिषा ।
स्वाहान्तैस्संहितामन्त्रैर्दत्वा तप्ताभिघारणम् ॥ ८७ ॥

---

१. धर्माधर्मशरीरायां धर्माधर्मरूपदक्षिणवामभुजरूपशरीरायां इत्यर्थः । २. तण्डुलं श्यामकादीनामिति यदाहुः "व्रीहिश्यामाकनीवारानथवा शालितण्डुलान् । प्रक्षाल्य निक्षिपेत्पश्चात् हृदयेन तु चालयेत्" इति । ३. एकशिष्यविधानाय एकशिष्यार्थमित्यर्थः । अस्य श्लोकस्यायमर्थः । एकस्य शिष्यस्य प्रसृतिपञ्चकम् । द्वित्रिशिष्येषु विषये प्रसृतिपञ्चकादुपरि एकैकप्रसृतिविवर्धनं मन्तव्यं इति । ४. पिधानं कवचाणुनेति भाजनान्तरेणाऽऽच्छादनं पिधानम् ।

संस्थाप्य मण्डले स्थालीं सदर्भेऽस्त्राणुना कृते ।
[1]प्रणवेन विधायास्यामुल्लेखं लेपयेद्धृदा ॥ ८८ ॥

सुशीतलो भवेत्येवं प्रार्थ्य शीताभिघारणम् ।
विदध्यात्संहितामन्त्रैर्वौषडन्तैस्सकृत्सकृत् ॥ ८९ ॥

[2]धर्माद्यासनके धृत्वा कुण्डपश्चिममण्डले ।
सम्पातं च स्रुवं धून्वन् तद्वत्संहितया चरेत् ॥ ९० ॥

चरुकं सकृदालभ्य तथैव वौषडन्तया ।
धेनुमुद्रामृतीभूतं स्थण्डिलेशान्तिकं नयेत् ॥ ९१ ॥

साज्यं भागं स्वशिष्याणां भागौ देवाय वह्नये ।
कुर्यात्तं लोकपालेभ्यस्समध्वाज्यमिदं त्रयम् ॥ ९२ ॥

नमोऽन्तेन हृदा दद्यात्तेनैवाऽऽचमनीयकम् ।

### प्रायश्चित्तहोमोऽन्तर्बलिश्च ।

साष्टमस्त्रं शतं हुत्वा दद्यात्पूर्णां यथाविधि ॥ ९३ ॥
मण्डले कुण्डतः पूर्वे मध्ये वा शम्भुकुम्भयोः ।
रुद्रमातृगणादीनां निर्वृत्यान्तर्बलिं हृदा ॥ ९४ ॥

---

१. प्रणवेन विधायास्यामिति । अयमर्थः प्रणवयुक्तहृदयेन स्थाल्यामुल्लेखं कृत्वेत्यर्थः । २. धर्माद्यासनके षड्विधासने इत्यर्थः ।

शिवादनुज्ञां लब्ध्वा निष्क्रमणप्रकारः ।

शिवम[1]ध्येष्य ल[2]ब्धाज्ञः विधायैकत्वभावनाम् ।
सर्वज्ञत्वादियुक्तोऽहं समस्ताध्वोपरि स्थितः ॥ ९५ ॥

ममांशो योजनस्थानमधिष्ठानामहाध्वरे ।
शिवोऽहमित्यहङ्कारी निष्क्रमेद्या[3]गमण्टपात् ॥ ९६ ॥

समयदीक्षाप्रकारः ।

न्यस्तपूर्वा[4]ग्रसद्दर्भे शस्त्राणुकृतमण्डले ।
प्र[5]णवासनके शिष्यं शुक्लवस्त्रोत्तरीयकम् ॥ ९७ ॥

स्नातं तूदङ्मुखं मुक्त्यै पूर्ववक्त्रं च भुक्तये ।
ऊर्ध्वकायं समारोप्य पूर्वास्यः प्रविलोकयेत् ॥ ९८ ॥

चरणादिशिखां मुक्त्यै यावद्भुक्त्यै विलोमतः ।
चक्षुषा स[6]म्प्रसादेन शैवं धाम विवृण्वता ॥ ९९ ॥

---

१. **अध्येष्येति** अध्येषणाप्रकारस्त्वित्थं "भगवन् भवतैव गुर्वधिकरणारूढेनाऽऽदिष्टोऽहं "अनुग्राह्यास्त्वया शिष्या यथा शास्त्रमनिन्दिता" इति । त इमे यथोक्तलक्षणा मदन्तिकमुपनीताः तत्प्रसीद मामधिष्ठाय येनाहमेतान् भवच्चरणस्मरणार्हकान् करोमि" इति । २. **लब्धाज्ञः** एवमस्त्विति शिवेनोक्तं भावयित्वेत्यर्थः । ३. **यागमण्टपात्** यज्ञशालायाः । ४. **न्यस्तपूर्वाग्रेति** मातृकायां दूर्वाग्रेति वर्तते क्रियाक्रमद्योतिकामनुसृत्यैवं विन्यस्तम् । ५. **प्रणवासने** प्रणवमयपीठे । ६. **सम्प्रसादेन** सानुग्रहेण ।

[1]अस्त्रोदकेन सम्प्रोक्ष्य मन्त्राम्बुस्नानसिद्धये ।
भस्मना स्नानविघ्नानां शान्तये पाशभित्तये ॥ १०० ॥
[2]सृष्टिसंहारयोगेन ताडयेदस्त्रभस्मना ।
पुनरस्त्राम्बुना प्रोक्ष्य सकळीकरणाय तम् ॥ १०१ ॥
नाभेरूर्ध्वं कुशाग्रेण मार्जनायास्त्रमुच्चरन् ।
त्रिधाऽऽलभेत तं मूलैरघमर्षाय नाभ्यधः ॥ १०२ ॥
द्वैविध्याय च पाशानां हृत्प्रदेशं शराणुना ।
तच्छरीरे शिवं साङ्गं सासनं विन्यसेत्ततः ॥ १०३ ॥
[3]पुष्पाद्यैः पूजितस्यास्य नेत्रे नेत्रेण वा हृदा ।
बद्ध्वा मन्त्रितवस्त्रेण सितेन स[4]दशेन च ॥ १०४ ॥
प्रदक्षिणक्रमादेनं प्र[5]वेश्य शि[6]वदक्षिणे ।
षडुत्थमासनं दत्वा यथावर्णं निवेशयेत् ॥ १०५ ॥
संहारमुद्रयाऽऽत्मानं मूर्त्या तस्य हृदम्बुजे ।
निरुध्य शोधिते काये न्यासं कृत्वा समर्चयेत् ॥ १०६ ॥

---

१. अस्त्रोदकेन सम्प्रोक्ष्येति । "मस्तकात्पादपर्यन्तं भुक्तौ मुक्तौ तदन्यतः । अस्त्रेण हुंफडन्तेन प्रोक्षण्यर्घ्योदकेन तु" इति सिद्धान्तशेखरोक्तिरत्र स्मर्तव्या । २. सृष्टिसंहारयोगेनेति सृष्टिक्रमो भौतिकस्य संहारक्रमो नैष्ठिकस्य । ३. पुष्पाद्यैः पूजितस्य अष्टपुष्पिकयार्चितस्य । ४. सदशेन ससूक्ष्मेण । ५. प्रवेश्य प्रवेशं कारयित्वा । ६. शिवदक्षिणे मण्डलेश्वरस्य दक्षिणे ।

पूर्वाननस्य शिष्यस्य मूलमन्त्रेण मस्तके ।
शिवहस्तः प्रदातव्यो व्योमेशपददायकः ॥ १०७ ॥

शिवसेवोग्रतोपाये दत्ते हस्ते शिवाणुना ।
शिवे प्रक्षेपयेत्पुष्पमपनीयान्धकारकम् ॥ १०८ ॥

तत्पातस्थानमन्त्राद्यं[1] शिवदेवगणान्तकम् ।
विप्रादीनां क्रमान्नाम कुर्याद्वा स्वेच्छया गुरुः ॥१०९॥

प्रणतिं कुम्भवर्धन्योः कारयित्वाऽनलान्तिके ।
स्वदक्षिणासने[2] तद्वत् सौम्यास्यमुपवेशयेत् ॥ ११० ॥

शिष्यदेहविनिष्क्रान्तां सुषुम्नामिव चिन्तयेत् ।
निजविग्रहलीनां च दर्भमूलेन मन्त्रितम् ॥ १११ ॥

दर्भाग्रं दक्षिणे तस्य निधाय करपल्लवे ।
तन्मूलमात्मजङ्घायामग्रं वेदिमतान्तरम् ॥ ११२ ॥

---

१. तत्पातस्थानमन्त्राद्यं तस्य पुष्पस्य पातस्थानं पतनस्थलं तस्मिन् यो मन्त्रः पूजितः ईशानादिः स आद्यः यस्य तत् तथोक्तम् । अयं भावः प्रसूनं मण्डलस्थशिवस्येशानवक्त्रे निपतितं चेत् द्विजस्येशानशिवः, क्षत्रियस्येशानदेवः, वैश्यशूद्रयोरीशानगणः इत्येवं नाम कारयेत् । तत्पुरुषादिषु तत्पुरुषशिवं इत्येवं प्रकारतो विप्रादिक्रमेण नाम कार्यम् । हृदयादिषु हृदयशिव इत्यादिक्रमेणेति वेदितव्यः । स्त्रीणां शक्त्यन्तं नाम ब्राह्मण्यादिक्रमेण विदध्यात् । ईशशिवशक्तिः ईशदेवशक्तिः ईशगणशक्तिः इति ॥ २. स्वदक्षिणासने इति स्वयंप्राङ्मुखस्सन् प्रणवासने शिष्यमुदङ्मुखं स्थपयेदित्यर्थः ।

शिष्यस्य हृदयं गत्वा रेचकेण शिवाणुना ।
पूरकेण समागत्य स्वकीयं हृदयाम्बुजम् ॥ ११३ ॥

शिवाग्निना पुनः कृत्वा नाडीसन्धानमीदृशम् ।
हृदा तत्सन्निधानार्थं जुहुयादाहुतित्रयम् ॥ ११४ ॥

शिवहस्तस्थिरत्वार्थं शतं मूलेन होमयेत् ।
इत्थं समयदीक्षायां भवेद्योग्यश्शिवार्चने ॥११५-७३९॥

इति क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
समयदीक्षाविधिः सम्पूर्णः ।



॥ श्रीः ॥

# अथ विशेषदीक्षाविधिः ।



अथ संस्कारदीक्षाया विधानमभिधीयते ।

वागीश्वरीवागीश्वरार्चनम् ।

आवाहयेन्महेशस्य वह्निस्थस्य शिवौ[1] हृदि ॥ १ ॥

संश्लिष्टौ तौ समभ्यर्च्य सन्तर्प्य हृदयाणुना ।
तयोस्सन्निधये दद्यात्तेनैवाऽऽहुतिपञ्चकम् ॥ २ ॥

---

१. शिवौ वागीश्वरीवागीश्वरौ ।

रुद्रांशत्वसंम्पत्त्यर्थं शिष्यात्मनः वागीश्वरीगर्भ-
निक्षेपणविधिः ।

कुसुमेनाऽस्त्रजप्तेन[1] ताडयेद्धृदये शिशुम् ।
प्रस्फुरत्तारकाकारं[2] चैतन्यं तत्र[3] भावयेत् ॥ ३ ॥

प्रविश्य तत्र हूङ्कारयुक्तं रेचकयोगतः ।
संहारिण्या तदाकृष्य पूरकेण हृदि न्यसेत् ॥ ४ ॥

ततो वागीश्वरीयोनौ मुद्रयोद्भवसंज्ञया ।
हृत्सम्पुटाऽऽत्मन्त्रेण[4] रेचकेण विनिक्षिपेत् ॥ ५ ॥

ओं हां हं हां आत्मने नमः ।

अग्नौ होमाऽऽचरणकालनिर्देशः ।

जाज्वल्यमाने निर्धूमे जुहुयादिष्टसिद्धये ।
अप्रबुद्धे सधूमे तु होता वह्नौ न सिद्ध्यति ॥ ६ ॥

स्निग्धप्रदक्षिणाऽऽवर्तस्सुगन्धिश्शस्यतेऽनलः ।
विपरीतस्फुलिङ्गी च भूमिस्पृङ्नप्रशस्यते ॥ ७ ॥

---

१. **अस्त्रजप्तेन** अस्त्राय हुंफडिति मन्त्रजप्तेनेत्यर्थः । २. **प्रस्फुरत्तारकाकारं** प्रज्वलत्तेजः पिण्डाकृतिं सूक्ष्मदेहास्थितामिति यावत् । ३. **तत्र भावयेत्** शिष्यहृदये चिन्तयेदित्यर्थः । ४. **हृत्संपुटात्ममन्त्रेणे**ति अनुपदमेव वक्ष्यमाण ओं हां हं हां आत्मने नम इति मन्त्रेगेत्यर्थः ।

अग्निचिह्नाऽनुमेयपापनिर्देशः ।

अन्तेवासिकृतं पापं जानीयादग्निलक्षणैः[1] ।
विष्ठागन्धे स भूहर्ता ब्रह्महा गुरुतल्पगः ॥ ८ ॥
सुरापो गुरुहन्ता च गोघ्नश्च कृतनाशनः ।
कृष्णेऽग्नौ शवगन्धे च गर्भभर्तृविनाशनः ॥ ९ ॥
भ्रमति स्त्रीवधे वह्निः कम्पते हेमहर्तरि ।
वधे स्फुटति बालस्य निस्तेजा गर्भघातके ॥ १० ॥
इत्येवमादिभिश्चिह्नैर्ज्ञात्वा शिष्यस्य कल्मषम् ।
पापभक्षणहोमेन दहेद्वा तं नैवाऽऽत्मना[2] ॥ ११ ॥
द्विजत्वाऽऽपादनायाथ तथा रुद्रांशभावने ।
आहारबीजसंशुद्धौ गर्भाधानाय संस्कृतौ ॥ १२ ॥
सीमन्ते जन्मने नामकरणाय च होमयेत् ।
शतानि पञ्च मूलेन चौळादिषु दशांशतः ॥ १३ ॥

गर्भाधानादीनां संस्काराणामर्थविचारः ।

शिथिलीभूतबन्धस्य[3] शक्तावुत्कर्षणं तु यत् ।
आत्मनो रुद्रपुत्रत्वे गर्भाधानं तदुच्यते ॥ १४ ॥

---

१. अग्निलक्षणैः शिवाग्नेश्चिह्नैः । २. नवात्मनेति ओं हसक्षमलवरय ॐ नवात्मने शिवाय नमः इति मन्त्रेणेत्यर्थः । वा शब्दस्वारस्यात् पापभक्षणहोमेन वा नवात्मना शिवमन्त्रेण वेत्यर्थो बोद्धव्यः । ३. शिथिलीभूतबन्धस्येति गर्भस्थाऽऽत्मनः मायागर्भादुद्धृत्य शक्तिगर्भे शिवबीजत्वाऽऽपादनेन नियोजन गर्भाऽऽधानम् ।

स्वातन्त्र्यात्मगुणव्यक्तिरिह पुंसवनं स्मृतम् ।
मायात्मनोर्विवेकेन ज्ञानसीमन्तबन्धनम् ॥ १५॥

शिवादिशुद्धसद्वस्तुस्वीकारो जननं मतम् ।
बोधनं यच्छिवत्वेन शिवत्वार्हस्य नाम तत् ॥ १६॥

होमानन्तरकरणीयविधिः ।

संहारमुद्रयाऽऽत्मानं स्फुरद्वह्निकणोपमम् ।
निदधीत समादाय निजे हृदयपङ्कजे ॥ १७॥

ततः कुम्भस्य योगेन मूलमन्त्रमुदीरयन् ।
कुर्यात्समरसीभावं तदात्मशिवयोर्हृदि ॥ १८॥

ब्रह्मादिकारणत्यागक्रमाद्रेचकयोगतः ।
नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ॥ १९॥

हृत्सम्पुटितमन्त्रेण रेचकेण विधानवित् ।
शिष्यस्य हृदयाम्भोजकर्णिकायां विनिक्षिपेत् ॥ २०॥

शिष्यसंस्कारानन्तरकरणीयविधिः ।

पूजां शिवस्य वह्नेश्च कारयित्वा तदोचिताम् ।
प्रणतिं चाऽऽत्मने शिष्यं समयान् श्रावयेद्यथा ॥ २१॥

---

१. स्वातन्त्र्यात्मेति आत्मनः निर्मलगुणाभिव्यक्तिः पुंसवनम् ।
२. शिवान्तं शिवतत्वान्तम् ।

शिष्यार्थं समयश्रावणप्रकारः ।

न निन्देत्कारणं[1] देवं न शास्त्रं तेन भाषितम् ।
न गुरुं साधकं चैव लिङ्गच्छायां न लङ्घयेत् ॥ २२ ॥
नाद्यान्नलङ्घयेन्माल्यं[2] न निन्द्याच्छिवदीक्षितम् ।
शिवाग्निगुरुपूजा च कर्तव्या जीविताविधि ॥ २३ ॥

समयाचरणासमर्थानां गतिः ।

बालबालिशवृद्धस्त्रीभोगभुग्व्याधितात्मनाम् ।
यथाशक्ति ददीतैतान्[3] समर्थस्य समग्रकान् ॥ २४ ॥

ब्रह्मचर्याश्रमस्वीकारकामस्य तद्व्रताङ्गदानविधिः ।

ब्रह्माङ्गानि[4] जटाभस्मदण्डकौपीनसंयमान् ।
ईशानाद्यैर्हृदाद्यैर्वा पृथक्पात्रे यथाक्रमम् ॥ २५ ॥
स्वाहान्तं संहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत् ।
सम्पाताभिहुतान् कृत्वा स्थण्डिलेशाय दर्शयेत् ॥ २६ ॥
रक्षणाय घटाधस्तादारोप्य क्षणमात्रकम् ।
शिवादाज्ञां समादाय ददीत व्रतिने गुरुः ॥ २७ ॥
एवं समयदीक्षायां विशिष्टायां विशेषतः ।
वह्निहोमाऽऽगमज्ञाने योग्यस्संजायते शिशुः ॥ २८-७६७ ॥

क्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
विशेषदीक्षाविधिस्सम्पूर्णः ।

---

१. कारणं जगत्कर्तारम् । २. नाद्यात् न भुंज्यात् । ३. ददीतैतान् एतान् समयानित्यर्थः । ४. व्रताङ्गानीति अन्यत्रविद्यते ।

॥ श्रीः ॥

# अथ निर्वाणदीक्षाविधिः।

अथ निर्वाणदीक्षायां कुर्यान्मूलादिदीपनम्[1]।
पाशबन्धनशक्त्यर्थं[2] ताडनादिकृतेऽपि[3] च ॥ १ ॥
एकैकया घृताहुत्या प्रत्येकं तु त्रयेण वा।
बीजगर्भशिखाद्वन्द्वहुंफडन्तध्रुवादिना ॥ २ ॥

ओं हूं हौं हूं हुं फट् मूलमन्त्रस्य ओं हूं हां हूं हुंफट् हृदयस्य एवं शिरः प्रभृतीनामपि।

इत्येवं दीपनं कुर्यात्सर्वस्मिन् क्रूरकर्मणि।
शान्तिके पौष्टिके वश्ये वौषडन्तादिनाऽणुना ॥ ३ ॥
वषट्वौषट्समोपेतैर्वकारस्योपरि स्थितैः।
हवनं शम्बरैः कुर्यात्सर्वत्राप्यायनादिषु ॥ ४ ॥

पाशसूत्रबन्धनाविधिः।

ततस्स्वसव्यभागस्थं मण्डले स्तब्धविग्रहम्।
शिष्यं सम्पूज्य सत्सूत्रं सुषुम्नेति विभावितम् ॥ ५ ॥

---

१. मूलादिदीपनं मूलाद्यस्त्रान्तमन्त्राणां दीपनं इति भावः। २. पाशबन्धनशक्त्यर्थं पाशबन्धनसामर्थ्यनिष्पत्तये। ३. ताडनादिकृते ताडनादिकरणाय च।

मूलेन तच्छिखाबद्धं पादाङ्गुष्ठान्तमानयेत्[1] ।
संहारेण मुमुक्षोस्तु बध्नीयात्तच्छिखाग्रके ॥ ६ ॥
पुंसस्तु दक्षिणे भागे वामे नार्या नियोजयेत् ।

सूत्रे शक्त्यादिन्यासक्रमः ।

शक्तिं च शक्तिमन्त्रेण पूजितां तस्य मस्तके ॥ ७ ॥
संहारमुद्रयाऽऽदाय सूत्रे तेनैव योजयेत् ।
नाडीस्त्वादाय मूलेन सूत्रे[2] न्यस्य हृदार्चयेत् ॥ ८ ॥
अवकुण्ठ्य तनुत्रेण हृदयेनाहुतित्रयम् ।
दद्यात्तत्सन्निधानार्थं शक्तावप्येवमेव हि ॥ ९ ॥

ओं हां मन्त्राध्वने नमः, ओं हां पदाध्वने नमः, ओं हां वर्णाध्वने नमः, ओं हां भुवनाध्वने नमः, ओं हां तत्वाध्वने नमः, ओं हां कलाध्वने नमः ।

इति षड्विधमध्वानं सूत्रे न्यस्याऽस्त्रवारिणा ।

सूत्रे आत्मसंयोजनक्रमः ।

शिष्यं प्रोक्ष्याऽस्त्रजप्तेन पुष्पेण हृदि[3] ताडयेत् ॥ १० ॥
ओं हः हुंफट् ।

---

१. पादाङ्गुष्ठान्तमानयेदिति आनयेत् प्रसारयेदित्यर्थः । २. सूत्रे न्यस्य हृदार्चयेत् ओं हौं इडायै नमः । ओं हौं पिङ्गलायै नमः । ओं हौं सुषुम्नायै नमः इति । ३. हृदि ताडयेदिति सकलदेहव्यापकत्वेन स्थितस्याऽऽत्मनः एकत्र हृद्देशे सङ्घट्टनार्थं ताडनमिति ज्ञेयम् ।

प्रविश्य तत्र हुङ्कारयुक्ते रेचकयोगतः ।
चैतन्यं हंसबीजस्थं विश्लिष्येदायुधाणुना ॥ ११ ॥
आ[1]च्छिद्य शक्तिमन्त्रेण ओं हां हं हां स्वाहेति चाणुना।
संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ॥ १२ ॥
ओं हां हं हां आत्मने नमः ।
व्यापकं भावयेदेनं तनुत्रेणाऽवकुण्ठयेत् ।
आहुतित्रितयं दद्याद्धृदा सन्निधिहेतवे ॥ १३ ॥

सूत्रस्थे आत्मनि शान्त्यतीतकलासंयोजनम् ।

विद्यादेहं च विन्यस्य शान्त्यतीतावलोकनम् ।
ओं हौं शान्त्यतीत कलापाशाय नम इत्यनेनावलोक्य-
तस्यामितरतत्त्वाद्यमन्तर्भूतं विभावयेत् ॥ १४ ॥
द्वे[2] तत्त्वे मन्त्र[3]मप्येकं प[4]दं व[5]र्णाश्च षोडश ।
तथाऽष्टौ[6] भुवनान्यस्यां बीजं[7]नाडी(कख)द्वयम् ॥१५॥

---

१. आच्छिद्य उत्कृष्येत्यर्थः । २. द्वे तत्वे इति शिवतत्व-शक्तितत्त्वे इत्यर्थः । ३. मन्त्रमिति क्रियाक्रमद्योतिकायां ओं हौं हों हः इति शिवेशानास्त्रमन्त्राः इत्युक्तम् । ४. पदमिति ओङ्कार एकं पदं इत्यर्थः । ५. वर्णाश्चेति अ आ इत्यादिषोडशाच इत्यर्थः । ६. अष्टाविति पञ्चदशभुवनानीति क्रियाक्रमद्योतिकायां विद्यते । ७. बीजेति नादहकारौ बीजे नाड्यौ कुहूशङ्खिन्यौ ।

विषयं[1] च गुणं[2] चैकं कारणं च सदाशिवम् ।
सितायां शान्त्यतीतायामन्तर्भाव्य प्रताडयेत् ॥ १६ ॥

ओं हौं हूं शान्त्यतीतकलापाशाय हुंफट् ।

संहारमुद्रयाऽऽदाय निदध्यात्सूत्र[3]मस्तके ।
पूजयेदाहुतीस्तिस्रो दद्यात्सान्निध्यहेतवे ॥ १७ ॥

सूत्रस्थ आत्मनि शान्तिकलासंयोजनम् ।

तत्त्वे[4] द्वे अक्षरे[5] द्वे च बीज[6]नाडीकखद्वयम् ।
गुणौ[7] मन्त्रौ[8] तदब्जस्थमेकं कारणमीश्वरम् ॥ १८ ॥
पदानि भानुसङ्ख्यानि भुवना[9] दश सप्त च ।
एकं च विषयं[10] शान्तेः कृष्णाया मध्यतस्स्मरेत् ॥ १९ ॥
ताडयित्वा समादाय मुख[11]सूत्रे नियोजयेत् ।
जुहुयान्निजबीजेन सान्निध्यायाऽऽहुतित्रयम् ॥ २० ॥

ओं ह्यैं शान्तिकलायै नमः ।

---

१. विषयं शब्दमित्यर्थः । २. गुणमिति शब्दमित्यर्थः । ३. सूत्रमस्तके इति मस्तकस्थसूत्रे इत्यर्थः । ४. तत्वे द्वे इति सदाशिवेश्वरशुद्धविद्यातत्वानि त्रीणीति क्रियाक्रमद्योतिकायां विद्यते । ५. अक्षरे इति कखगा वर्णा इति क्रियाक्रमद्योतिका । ६. बीजेति बिन्दुयकारौ बीजे अलम्पुषायशानाड्यौ । ७. गुणाविति स्पर्शशब्दौ गुणौ इत्यर्थः । ८. मन्त्राविति हें हैं पुरुषकवचौ मन्त्रौ । ९. भुवना इति अष्टादश भुवनानीतिक्रियाक्रमद्योतिका । १०. विषयम् । स्पर्श इत्यर्थः । ११. मुखसूत्रे इति भ्रूमध्यस्थसूत्रे इत्यर्थः ।

सूत्रस्थात्मनि विद्याकलासंयोजनम् ।

विद्यायां सप्त[1] तत्त्वानि पदानामेकविंशतिम् ।
षड्[2]वर्णान् शम्बरं चैकं[3] लोकानां पञ्च[4]विंशतिम् ॥२१॥
गुणानां त्रय[5]मेकं च विषयं[6] रुद्रकारणम् ।
अन्तर्भाव्याऽतिरक्तायां बीज[7]नाडीकखद्वयम् ॥ २२ ॥
आताड्याऽऽदाय संयोज्य हृत्सूत्रे स्वाणुनार्चयेत् ।
ततस्तत्सन्निधानाय जुहुयादाहुतित्रयम् ॥ २३ ॥
ओं हूं विद्याकलायै नमः ।

सूत्रस्थाऽऽत्मनि प्रतिष्ठाकलासंयोजनक्रमः ।

चतु[8]र्विंशतितत्त्वानि वर्णानां पञ्च[9]विंशतिम् ।
बीज[10]नाडीकखद्वन्द्वं पद[11]द्व्यधिकत्रिंशतिम् ॥ २४ ॥

---

१. सप्त तत्त्वानीति मायाकालनियतिकलाविद्यारागपुरुषतत्त्वानि इत्यर्थः । २. षडिति सप्तेति क्रियाक्रमद्योतिका । ३. एकमिति हुं हूं अघोरशिखे मन्त्रौ इति क्रियाक्रमद्योतिका । ४. पञ्चविंशतिमिति सप्तविंशतिभुवनानीति क्रियाक्रमद्योतिका । ५. त्रयमिति रूपस्पर्शशब्दा इत्यर्थः । ६. विषयमिति रूपमित्यर्थः । ७. बीजेति मरौ बीजे पूषाहस्तिजिह्वानाड्यौ इत्यर्थः । ८. चतुर्विंशतितत्त्वानीति प्रकृतिगुणबुद्ध्यहङ्कारमनश्श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोऽबाख्यानि चतुर्विंशतितत्त्वानि इति भावः । ९. पञ्चविंशतिमिति चतुर्विंशतिरिति क्रियाक्रमद्योतिका । १०. बीजेति उवौ बीजे सुषुम्नागान्धारी नाड्यौ इत्यर्थः । ११. पदद्व्यधिकत्रिंशतिं इति द्वात्रिंशत्पदानीति भावः ।

षट्[1]पञ्चाशत्तु लोकानामस्यां गुणचतुष्टयम्[2] ।
मन्त्राणां त्रयमेकं[3] च विषयं[4] कारणं हरिम् ॥ २५ ॥

अन्तर्भाव्य प्रतिष्ठायां शुद्धायां ताडनादिकम् ।
विधाय नाभिसूत्रस्थे सन्निधानाऽऽहुतिं यजेत् ॥ २६ ॥

ओं ह्रीं प्रतिष्ठाकलायै नमः ।

सूत्रस्थाऽऽत्मनि निवृत्तिकलासंयोजनक्रमः ।

भुवनानां शतं साष्टं पदानामष्टविंशतिम् ।
बीज[5]नाडीसमीराणां द्वयमिन्द्रिययोरपि[6] ॥ २७ ॥

वर्णं[7] तत्त्वं[8] च विषयमेकैकं[9] गुणपञ्चकम्[10] ।
हेतुं ब्रह्माणमब्जस्थं शम्बराणां[11] चतुष्टयम् ॥ २८ ॥

निवृत्तौ पीतवर्णायामन्तर्भाव्याऽभिताडयेत् ।
आदाय पादभागान्ते सूत्रे विन्यस्य पूजयेत् ॥ २९ ॥

---

१. षट्पञ्चाशत्विति "लोकानां चतुराणां च षष्टी" इति मातृकापाठः । २. गुणचतुष्टयमिति शब्दस्पर्शरूपरसाख्यगुणचतुष्टयमित्यर्थः । ३. त्रयमिति क्रियाक्रमद्योतिकायाम् ओं हिं हीं वामदेवशिरसी मन्त्रौ इत्युक्तम् । ४. विषयमिति रसाख्यमिति भावः । ५. बीजनाडीति अकारलकारौ बीजे इडापिङ्गले नाड्यौ अपानप्राणौ वायू इत्यर्थः । ६. इन्द्रिययोरिति उपस्थघ्राणयोरित्यर्थः । ७. वर्णमिति क्षकारमित्यर्थः । ८. तत्वमिति पृथ्व्याख्यम् । ९. विषयमिति गन्धमित्यर्थः । १०. गुणपञ्चकं शब्दस्पर्शरूपरसगन्धान् । ११. शम्बराणामिति ओं हं हां सद्योजातहृदयाख्यमन्त्रद्वयमिति क्रियाक्रमद्योतिका ।

ओं ह्लां निवृत्तिकलायै नमः ।

जुहुयादाहुतीस्तिस्रस्सन्निधानाय पावके ।
इत्यादाय कलास्सूत्रे योजयेत् शिष्यविग्रहात् ॥ ३० ॥

सबीजदीक्षायां भावनाभेदः ।

सबीजायां तु दीक्षायां समयाचारपाशतः ।
देहारम्भकधर्माच्च मन्त्रसिद्धिफलादपि ॥ ३१ ॥
इष्टापूर्तादिधर्माच्च व्यतिरिक्तं प्रबन्धकम् ।
चैतन्यरोधकं सूक्ष्मं कलानामन्तरे स्मरेत् ॥ ३२ ॥

शान्त्यतीतादिकलानां तर्पणदीपनक्रमः ।

अमुनैव क्रमेणापि कुर्यात्तर्पणदीपने ।
आहुतीभिस्स्वमन्त्रेण तिसृभिस्तिसृभिर्यथा ॥ ३३ ॥

ओं हौं शान्त्यतीतकलापाशाय स्वाहा । इत्यादि तर्पणे ।
ओं हूं हौं हूं शान्त्यतीतकलापाशाय हुंफडित्यादि दीपने ।

ग्रन्थिकल्पनक्रमः ।

तत्सूत्रं व्याप्तिबोधाय[1] कलास्थानेषु[2] पञ्चसु ।
सम्मृज्य कुङ्कुमाद्येन तत्र साङ्गं शिवं यजेत् ॥ ३४ ॥

---

१. व्याप्तिबोधाय शान्त्यतीतादिकलास्थलेषु सूत्रव्याप्तिपरिज्ञानायेत्यर्थः । २. कलास्थानेषु पञ्चसु इति ब्रह्मरन्ध्रभ्रूमध्यगळनाभिजानुष्वित्यर्थः ।

हुंफडन्तैः कलामन्त्रैर्भित्वा पाशाननुक्रमात् ।
नमोऽन्तैश्च प्रविश्यान्तः कुर्याद्ग्रहणबन्धने ॥ ३५ ॥

ओं हूं हां हौं हां हूं शान्त्यतीतकलां गृह्णामि बध्नामि चेत्यादिभिर्मन्त्रैः कलानां ग्रहणबन्धनप्रयोगः ।

पाशादीनां[1] वशीकारो ग्रहणं, बन्धनं[2] पुनः ।
पुरुषं प्रति निश्शेषव्यापारप्रतिषेधनम् ॥ ३६ ॥
उपवेश्याथ तत्सूत्रं शिष्यस्कन्धे[3] निवेशयेत् ।

ग्रन्थिसूत्रसंरक्षणविधिः ।

विस्मृत्याद्यघमर्षाय शतं मूलेन होमयेत् ॥ ३७ ॥
शरावसम्पुटे पुंसस्त्रियाश्च प्रणितोदरे ।
हृदस्त्रसम्पुटं सूत्रं निधायाऽभ्यर्चयेद्धृदा ॥ ३८ ॥
सूत्रं शिवेन साङ्गेन कृत्वा सम्पातशोधितम्[4] ।
निदध्यात्कलशस्याधो रक्षां विज्ञापयेत्ततः ॥ ३९ ॥

पञ्चगव्यप्राशनविधिः ।

पुष्पं शिष्यकरे दत्वा सम्पूज्य कलशादिकम् ।
प्रणामय्य[5] बहिर्यायाद्यागमन्दिरमध्यतः[6] ॥ ४० ॥

---

१. पाशादीनामिति पाशादीनां वशीकरणमेव ग्रहणमिति ज्ञेयम् । २. बन्धनमिति बन्धनं नाम पाशानां पुरुषं प्रति व्यापारनिरोधनम् । ३. शिष्यस्कन्धे शिष्यस्य दक्षिणस्कन्धे इत्यर्थः । ४. सम्पातशोधितं साङ्गेन शिवमन्त्रेण संहितयेति शेषः । ५. प्रणामय्य अधिकरणपञ्चकमिति शेषः । ६. बहिर्यायादिति यागमन्दिरमध्यस्थलात् बहिर्गत्वा मण्डलत्रितयं कुर्यादित्यर्थः ।

मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननान् ।
भुक्तये पूर्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ॥ ४१ ॥
प्रथमे पञ्चगव्यस्य प्राशयेच्चुळुकत्रयम् ।
पाणिना कुशयुक्तेन ह्याचान्तानन्तरान्तरा ॥ ४२ ॥

चरुप्राशनविधिः ।

चरुकं तद्द्वितीयेतु ग्रासत्रितयसम्मितम् ।
अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् ॥ ४३ ॥
पलाशपुटके मुक्त्यै भुक्त्यै पिप्पलपत्रजे ।
हृदा सम्भोजयेद्दत्वा पूतैराचामयेज्जलैः ॥ ४४ ॥

दन्तकाष्ठसेवनविधिः ।

दन्तकाष्ठं हृदा दत्वा तद्दन्ताग्रविचर्वितम् ।
धूतमूर्ध्वमुखं भूमौ क्षेपयेत्पातमुन्नयेत् ॥ ४५ ॥
प्राक्पश्चिमोत्तरेशोर्ध्ववदनं पातमुत्तमम् ।
सर्वेषामेव शिष्याणा(मुत्तरास्य)मशोभनम् ॥ ४६ ॥
अथ दोषनिषेधार्थं शतमस्त्रेण होमयेत् ।
न्यूनादिदोषमोक्षाय मूलेनाष्टोत्तरं शतम् ॥ ४७ ॥

चरुप्राशनाद्यनन्तरकरणीयविधिः ।

विधाय स्थण्डिलेशाय सर्वकर्मसमर्पणम् ।
पूजां विसर्जनं चाऽस्य चण्डेशस्य च पूजनम् ॥४८॥

अपनीय च निर्माल्यं त्रिभिर्गोमयगोळकैः ।
भूमिं संशोध्य मूलेन शेषमग्नौ यजेच्चरौः ॥ ४९ ॥

कलशं लोकपालांश्च पूजयित्वा निरुध्य च ।
विसृजेद्गणमग्निं च रक्षितं यदि बाह्यतः ॥ ५० ॥

बाह्यतो लोकपालानां दत्वा संक्षेपतो बलिम् ।

शिष्यस्वापविधिः ।

भस्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् ॥५१॥

गृहस्थान् दर्भशय्यायां पूर्वशीर्षांस्तु[1] रक्षितान् ।
हृदा सन्नद्धशय्यायां यतीन् दक्षिणमस्तकान् ॥५२॥

शिखाबद्धशिखानस्त्ररक्षितान् स्वप्नमाणवम् ।
विज्ञाप्य स्वापयेच्छिष्यान् ततो यायात्पुनर्बहिः ॥५३॥

ओं हिलि हिलि शूलपाणये स्वाहा ओं ।
नमश्शम्भो त्रिणेत्राय पिङ्गळाय महात्मने ।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ५४ ॥

आचक्ष्व देवदेवेश प्रपन्नोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्याणि हृदिस्थानीह यानि मे ॥५५॥

---

१. पूर्वशीर्षांस्तु रक्षितान् स्वपतो दीक्षितस्य रक्षायै तिलादिना रेखाकारान् प्राकारान् बहिर्विदधीतेति भावः । एषैव रक्षा ।

गुरुकर्तव्यक्रमः ।

पञ्चगव्यं चरुं प्राश्य गृहीत्वा दन्तधावनम् ।
समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीम् ॥
दीक्षागतं क्रियाकाण्डं संस्मरेत् संविशेद्गुरुः ।
इति संक्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ५७ ॥

दीक्षाधिवासविधिस्सम्पूर्णः ।

अथ शुभाशुभस्वप्नविमर्शः ।

अथ प्रातस्समुत्थाय कृतस्नानादिको गुरुः ।
शिष्यान् स्वप्नं यथादृष्टं संपृच्छेच्छुभहेतवे ॥ ५८ ॥
दध्याज्यमांसमद्यादेः प्रशस्ताभ्यव[1]हारिता ।
गजाद्यारोहणं धन्यं सितवस्त्रावकुण्ठनम् ॥ ५९ ॥
निन्द्यस्स्वावयवच्छेदो मषीकर्दमलेपनम् ।
तैलाभ्यङ्गोन्धकूपादिपतनं न प्रशस्यते ॥ ६० ॥
प्रायश्चित्तानु[2]सन्धानं कृत्वा दुस्स्वप्नशान्तये ।

निर्वाणदीक्षायाः पूर्वं करणीयविधिः ।

नित्यकर्मद्वयं कृत्वा प्रविश्य मखमण्टपम् ॥ ६१ ॥
स्वा[3]र्चान्तं नित्यवत्कर्म कुर्यान्नैमित्तिके विधौ ।
ततस्संशोध्यमध्वानमुष्णीषं भूषणानि च ॥ ६२ ॥

---

१. अभ्यवहारिता दध्यादिभक्षकत्वमित्यर्थः । २. अनुसन्धानमिति "दृष्टे शुभेतरे स्वप्ने निशाप्रान्ते सहस्रकम् । मध्ये तदर्धमारम्भे शतं चान्यत्र कल्पयेत् । धियाऽऽत्मनोऽपि दुस्स्वप्ने द्विगुणं हेतिना यजेत्" इत्युक्त रीत्याऽनुसन्दधीतेत्यर्थः । ३. स्वार्चान्तं सूर्यपूजादिस्वार्चान्तमितिभावः ।

विन्यस्याऽऽत्मनि पूर्वोक्तं शिवहस्तं च भास्वरम् ।
कुम्भस्थं पूजयेदीशामिन्द्रादीनप्यनुक्रमात् ॥ ६३ ॥
मण्डले स्थण्डिले वाथ प्रकुर्वीत शिवार्चनम् ।
तर्पणं पूजनं वह्नेः पूर्णान्तं मन्त्रतर्पणम् ॥ ६४ ॥
दुस्स्वप्नदोषमोक्षार्थं शस्त्रेणाष्टाधिकं शतम् ।
हुत्वा हुंसंपुटेनैव विदध्यान्मन्त्रदीपनम् ॥ ६५ ॥
अन्तर्बलिविधानं च मध्ये स्थण्डिलकुम्भयोः ।
कृत्वा शिष्यप्रवेशाय लब्धानुज्ञो बहिर्व्रजेत् ॥ ६६ ॥
कुर्यात्समयवत्तस्य मण्डलाऽऽरोहणादिकम्[1] ।
सम्पातहोमं तन्नाडीरूपदर्भकरान्तकम् ॥ ६७ ॥
एतत्सन्निधये त्रिस्रो हुत्वा मूलाणुनाऽऽहुतीः ।
कुम्भस्थं शिवमभ्यर्च्य पाशसूत्रमुपाहरेत् ॥ ६८ ॥
स्वदक्षिणोर्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च ।
तच्छिखायां निबध्नीयात्पादाङ्गुष्ठान्तलम्बितम् ॥ ६९ ॥

निवृत्तिकलाशुद्धिक्रमः ।

तन्निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य[2] चेतसा ।

---

१. मण्डलारोहणादिकं इति पूर्वमग्निसमीपे मण्डलं कृत्वा शिष्यं प्रणवासने सम्यङ्निधायानन्तरं शोध्यमध्वानं न्यसेदित्यादिकमर्थः । २. आलोक्य चेतसेति जान्वध इति शेषः ।

ओं हां निवृत्तिकलायै नमः । ओं हां पृथ्वीतत्वाय नमः ।

ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ७० ॥

कपालोजश्च बुद्धश्च[1] वज्रदेहः प्रमर्दनः ।
विभूतिरव्ययश्शास्ता पिनाकी त्रिदशाधिपः ॥ ७१ ॥
अग्निरुद्रोहुताशी च पिङ्गलः खादको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षयान्तकौ ॥ ७२ ॥
याम्यो[2] मृत्युहरो धाता विधाता कर्तृसंज्ञकः ।
कालो धर्मोऽप्यधर्मश्च संयोक्ता च वियोजकः ॥ ७३ ॥
नैर्ऋतो[3] मारणो हन्ता क्रूरदृष्टिर्भयानकः ।
ऊर्ध्वशेफो विरूपाक्षो धूम्रो लोहितदंष्ट्रिणौ[4] ॥ ७४ ॥
बलश्चातिबलश्चैव पाशहस्तो महाबलः ।
श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥ ७५ ॥

---

१. बुध्न इति पाठभेदः । २. याम्यइतिपद्येन प्रतिपाद्यमानस्य रुद्रदशकस्य प्रतिनिधित्वेन "याम्यो मृत्युर्हरो धाता विधाता कर्तृसंज्ञकः । संयोक्ता च वियोक्ता च धर्मो धर्मपतिस्तथा" इति पद्यप्रतिपाद्यमानं रुद्रदशकं केचिदाहुः । ३. नैर्ऋत इति निर्ऋतिरिति केचित् । ४. दंष्ट्रिणौ दंष्ट्रवानिति मातृकापाठः ।

बुद्धिबाह्यश्च भीमश्च दशैते वारुणीं श्रिताः ।
शीघ्रो लघुर्वायुवेगस्सूक्ष्मस्तीक्ष्णः क्षयान्तकः ॥ ७६ ॥
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।
जटामकुटधारी च नानारत्नधरस्तथा ॥ ७७ ॥
निधीशो रूपवान् धन्यो सौम्यदेहः प्रसादकृत् ।
प्रकाशोऽप्यथ लक्ष्मीवान् कामरूपो दशोत्तरे ॥ ७८ ॥
विद्याधरो ज्ञानधरस्सर्वज्ञो वेदपारगः ।
मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ ७९ ॥
सर्वविद्याविधाताच सुखदुःखकरो दश ।
अनन्तः पावको धीरः पाताळाधिपतिस्तथा ॥ ८० ॥
वृषो विषधरो वीर्यो ग्रसनस्सर्वतोमुखः ।
लोहितश्चेति विज्ञेया दशरुद्रास्तलस्थिताः ॥ ८१ ॥
शम्भुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः ।
संवाहश्च विवाहश्च नभोलिप्सुर्विचक्षणः ॥ ८२ ॥
अथ हूहुककालाग्निरुद्रौ हाटक एव च ।
कूष्माण्डकश्च सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ ८३ ॥
रुद्रश्चाष्टाविमे रुद्राः कटाहाभ्यन्तरे स्थिताः ।
एतेषामेव नामानि भुवनानामपि स्मरेत् ॥ ८४ ॥

---

१. बुद्धीति बुद्धिबाह्यश्च भीमश्चेति स्थाने मेघनादस्सुनादश्चेति क्वचित् । एवमेव भुवनेषु मतभेदः प्रदृश्यते । विस्तरभयान्नेह प्रतन्यते ।

पदाध्वचिन्तनम् ।

भवभव। भवोद्भव। सर्वभूतसुखप्रद। सर्वसान्निध्यकर। ब्रह्मविष्णुरुद्रपर। अनर्चितानर्चित। असंस्तुतासंस्तुत। पूर्वस्थित पूर्वस्थित। साक्षिसाक्षि। तुरुतुरु। पतङ्गपतङ्ग। पिङ्गपिङ्ग। ज्ञानज्ञान। शब्दशब्द। सूक्ष्मसूक्ष्म। शिव। शर्व। सर्वद। ओं। नमः। शिवाय। ओं। नमः। नमः। शिवाय नमः। नमः। ओं। इत्यष्टाविंशतिपदानि।

मन्त्राध्वादिचिन्तनम् ।

सद्योहृदस्त्रनेत्राणि मन्त्रो वर्णस्तु को मतः ।
बीजे हकारलौ नाड्यौ द्वे इडापिङ्गलाह्वये ॥ ८५ ॥

प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये ।
गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चकम् ॥ ८६ ॥

पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम् ।
विस्तारो योजनानां तु कोटिरस्य शताहता ॥ ८७ ॥

पशोर्नानाविधशरीरप्रादुर्भावार्थं चतुर्दशयोनिनिरूपणम् ।

अत्रैवाऽन्तर्गता ज्ञेया योनयोऽपि चतुर्दश ।
प्रथाहि षडदेवानामष्टान्या देवयोनयः ॥ ८८ ॥

मृगः पक्षी च पशवश्चतुर्थश्च सरीसृपः ।
स्थावरं पञ्चमं सर्वं योनिष्षष्ठी च मानुषी ॥ ८९ ॥

---

१. सरीसृपः सर्पः ।

पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ।
सौम्यं प्राजेश्वरं ब्राह्ममष्टकं परिकीर्तितम् ॥ ९० ॥

अष्टानां पार्थिवं तत्वमधिकारास्पदं मतम् ।
लयस्तु प्रकृतौ बुद्धौ भोगे ब्रह्मा च कारणम् ॥ ९१ ॥

ततो जाग्रदवस्थान्ते[1] समस्तैर्भुवनादिभिः ।
निवृत्तिगर्भितां ध्यात्वा स्वमन्त्रेण वियोज्य च ॥ ९२ ॥

ओं हां ह्लां हां निवृत्तिकलापाशाय हुंफट् इति ताडनादौ । नम इति प्रवेशे । फडिति वियोगे । ततः ओं हां ह्लां हां निवृत्तिकलापाशाय स्वाहेत्यनेनाङ्कुशमुद्रया पूरकेणाऽऽकृष्य ओं हां ह्लां हां निवृत्तिकलापाशाय हुंफट् इत्यनेन संहारमुद्रया कुम्भकेन नाभ्यधस्तात् निवृत्तिकलापाशाय नम इत्यनेनोद्भवमुद्रया रेचकेण कुण्डे संस्थाप्य ओं हां ह्लां हां निवृत्तिकलापाशाय नम इत्यनेनार्घ्यं दत्वा सम्पूज्य चानेनैव स्वाहान्तेनैव सन्निधानाहुतित्रयं सन्तर्पणाहुतित्रयं च दत्वा ओं हां ब्रह्मणे नमः इति ब्रह्माणमावाह्य सम्पूज्य च स्वाहान्तेन सन्तर्प्य च ।

ब्रह्मंस्तवाधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयाऽनुकूलेन विधिं विज्ञापयेदिति ॥ ९३ ॥

---

१. जाग्रदवस्थान्ते चक्षुश्श्रोत्रादिभिर्मनोबुद्ध्यहङ्कारैश्च ग्राह्यं भूतविषयज्ञानं जाग्रदवस्थेति भावः ।

आवाहयेत्ततो देवीं रक्तां वागीश्वरीं हृदा ।
इच्छाज्ञानक्रियारूपां षड्विधां स्वैरकारिणीं ॥ ९४॥
पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः ।
वागीश्वरं च निश्शेषयोनिविक्षोभकारणम् ॥ ९५॥
हृत्संपुटात्मबीजादिहुंफडन्तशराणुना ।
ताडयेद्धृदयं तस्य प्रविशेच्च विधानवित् ॥ ९६ ॥
ततश्शिष्यस्य चैतन्यं हृदि वह्निकणोपमम् ।
निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा ॥ ९७ ॥

ओं हां हं हां हः हुं फट् ओं हां हं हां स्वाहा । इत्यनेनाथ पूरकेणाङ्कुशमुद्रया तदाकृष्याऽऽत्ममन्त्रेण गृहीत्वाऽऽत्मनियोजयेत् । ओं हां हं हां आत्मने नमः ।

पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेण तत् ।
ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवास्पदम् ॥ ९८ ॥

जननाय गर्भाधानादिविधिः ।

गर्भाधानार्थमादाय युगपत्सर्वयोनिषु ।
क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया ॥ ९९ ॥

यथा ओं हां हं हां आत्मने नमः ।

---

१. आवाहयेत्ततो देवीमिति । तस्यां कलायां स्थावरादियोनीरनन्तास्सङ्कल्प्य तद्व्यापिनीं वागीश्वरीं ध्यात्वा इत्यर्थः । २. वागीश्वरीं हृदेति ओं हां वागीश्वर्यै नमः इति मन्त्रेण । ३. वामयोद्भवमुद्रयेति वामा च वामाख्या शिवशक्तिः । वामनाडीमार्गे स्थिता ।

पूजयेदप्यनेनैव तर्पयेदपि पञ्चधा ।
अस्य योनिषु सर्वासु देहसिद्धिं हृदाचरेत् ॥ १०० ॥

नात्र पुंसवनं स्त्र्यादिशरीरस्याऽपि सम्भवात् ।
सीमन्तोन्नयनं चापि दैवादन्धादिदेहतः ॥ १०१ ॥

शिरसा जन्म कुर्वीत युगपत्सर्वदेहिनाम् ।
तथैव भावयेदेषामधिकारं शिखाणुना ॥ १०२ ॥

भोगं कवचमन्त्रेण शस्त्रेण विषयात्मनोः ।
मोहरूपमभेदं च लयसंज्ञं विभावयेत् ॥ १०३ ॥

शिवेन स्रोतसां शुद्धिं हृदा तत्वविशोधनम् ।
पञ्चपञ्चाहुतीर्दद्याद्गर्भाधानादिषु क्रमात् ॥ १०४ ॥

मायेयमलकर्मादिपाशबन्धनिवृत्तये ।
निष्कृत्यै[1] च हृदा पश्चाद्यजेत शतमाहुतिम् ॥ १०५ ॥

पाशभेदनदहनविधिः ।

मलशक्तितिरोधाने[2] पाशानां च शिवोधने ।
स्वाहान्तायुधमन्त्रेण पञ्च पञ्चाहुतीर्यजेत् ॥ १०६ ॥

---

१. निष्कृत्यै निखिलकर्मनिश्शेषीकरणरूपा शुद्धिः निष्कृतिशब्देनोच्यते । सामुदायिक्यै विशुद्ध्यै इति भावः । २. मलशक्तितिरोधाने मलकार्यशुद्ध्यर्थमिति भावः ।

मलाद्यन्तस्थपाशस्य सप्तवारास्त्रजप्तया ।
कर्तर्या छेदनं कुर्यात्कलाशस्त्रेण तद्यथा ॥ १०७ ॥

ओं ह्लां निवृत्तिकलापाशाय हः हुंफट् ।

बन्धकत्वनिवृत्यर्थं हस्ताभ्यां तं शराणुना ।
निमृज्य वर्तुळीकृत्य घृतपूर्णे स्रुवे धरेत् ॥ १०८ ॥

दहेदनु कलास्त्रेण केवलास्त्रेण भस्मसात् ।
कुर्यात्पञ्चाहुतीर्दत्वा पाशाङ्कुरनिवृत्तये ॥ १०९ ॥

ओं हः अस्त्राय हुंफट् ।

प्रायश्चित्तं ततः कुर्यादस्त्राहुतिभिरष्टभिः ।

कारणेश्वरब्रह्मसपर्या ।

अथवाऽन्यविधाकारं पूजयेत्तर्पयेद्यथा ॥ ११० ॥

ओं हां ब्रह्मन् शब्दस्पर्शौ शुल्कं गृहाण स्वाहेत्याहुतित्रयेणाधिकारमस्य समर्पयेत् ।

दग्धनिश्शेषपाशस्य ब्रह्मन्नस्य पशोस्त्वया ।
बन्धाय न पुनस्स्थेयं शिवाऽऽज्ञां श्रावयेदिति ॥१११॥

ततो विसृज्य धातारं नाड्या दक्षिणया शनैः ।
संहारमुद्रयाऽऽत्मानं कुम्भकेन निजाणुना ॥ ११२ ॥

राहुमुक्तैकदेशेन चन्द्रबिम्बेन सन्निभम् ।
आदाय योजयेत्सूत्रे रेचकेणोद्भवाख्यया ॥ ११३ ॥

पूजयित्वाऽर्घ्यपात्रस्थं तोयबिन्दुं सुधोपमम् ।
आप्यायनाय[1] शिष्यस्य गुरुश्शिरसि विन्यसेत् ॥११४॥

विसृज्य पितरौ दद्याद्वौषडन्तशिवाणुना ।
पूरणाय विधेः पूर्णा निवृत्तिरिति शोधिता ॥ ११५ ॥

प्रतिष्ठाकलाशुद्धिः ।

तत्त्वयोरथ[2] सन्धानं कुर्याच्छुद्धाविशुद्धयोः[3] ।
ह्रस्वदीर्घप्रयोगेण मान्तनादान्तसंज्ञितम् ॥ ११६ ॥

कलाध्वचिन्तनम् ।

ओं हां ह्लां हां हां ह्वीं हां निवृत्तिप्रतिष्ठाभ्यां नमः ।

तत्त्वाध्वचिन्तनम् ।

अप्तेजोवायुराकाशं तन्मात्रेन्द्रियबुद्धयः ।
गुणत्रयमहङ्कारश्चतुर्विंशः पुमानिति ॥ ११७ ॥

प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् ।

वर्णाध्वचिन्तनम् ।

पञ्चविंशतिसंख्यानि खादियान्ताक्षराणि च ॥ ११८ ॥

भुवनाध्वचिन्तनम् ।

पञ्चाशदधिकाष्षड्भिर्भुवनैस्तुल्यसंज्ञकाः ।
तावन्त एव रुद्राश्च ज्ञेयास्तत्र च तद्यथा ॥ ११९ ॥

---

१. आप्यायनाय विश्रमाय । २. तत्त्वयोरथ सन्धानं ...दुक्तं मृगेन्द्रे "सन्धानं नाम विलयश्शुद्धस्याशुद्धवर्त्मनि" इति । ३. शुद्धाविशुद्धयोः शुद्धाया निवृत्तिकलाया अशुद्धायाः प्रतिष्ठाकलायाश्चेत्यर्थः ।

अमरेशः प्रभासश्च नैमिशः पुष्करोऽपि च ।
तथाऽऽषाडिश्च[1] डिण्डिश्च भारभूतिरथाष्टमः ॥ १२० ॥
लकुळीशो हरिश्चन्द्रश्श्रीशैलो दशकस्स्मृतः ।
जेल्पेशा[2]म्रातकेशौ च महाकाळोऽथ मध्यमः ॥ १२१ ॥
केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् ।
ततो गया कुरुक्षेत्रं खलौ नादिकनादिकौ ॥ १२२ ॥
विमल[3]श्चाट्टहासश्च महेन्द्रो भीम इत्यथ ।
वस्त्रापदो रुद्रकोटिरविमुक्तो महालयः ॥ १२३ ॥
गोकर्णो भद्रकर्णश्च स्वर्णाक्षस्स्थाणुरेवच ।
अर्थाजेश[4]श्च सर्वज्ञो भासुरस्तदनन्तरम् ॥ १२४ ॥
सुबाहुर्मन्त्ररूपी च विशालो (थजल)स्तथा ।
रौद्रेशः पिङ्गलाक्षश्च कालदंष्ट्री भवेत्ततः ॥ १२५ ॥
विधुरश्चैव घोरश्च प्राजापत्यो हुताशनः ।
कालरूपी तथाकालकर्णोऽप्यथ भयानकः ॥ १२६ ॥
पतङ्गः पिङ्गळश्चैव हरस्सावित्र संज्ञकः ।
शङ्कुकर्णाभिधानश्च श्रीकण्ठश्चन्द्रमौलिना ॥ १२७ ॥

---

१. आषाढिश्चेति डिण्डिश्च मुण्डिश्चेति पाठभेदः । २. जलेश इति पाठभेदः । ३. विमलेश इति पाठभेदः । ४. अथाजेश इति अथाजेश इत्यारभ्याष्टकत्रये विद्यमानानि भुवनानि इतरग्रन्थाननुसारीणि वर्तन्ते ।

## पदाध्वचिन्तनम् ।

सहैते मन्त्रपर्यन्ताः कथ्यन्तेऽथ पदान्यपि ।

व्यापिन् व्यापिन् । अरूपिन् अरूपिन् । प्रथम प्रथम । तेजस्तेजः । ज्योतिर्ज्योतिः । अरूप । अनग्नि । अधूम । अभस्म । अनादे । नानानाना । धूधूधूधू । ओं । भूः । ओं । भुवः । ओं । सुवः । अनिधन । निधन । निधनोद्भव । शिव । शर्व । परमात्मन् । महेश्वर । महादेव । सद्भावेश्वर । महातेजाः । योगाधिप(तये)ते । मुञ्च मुञ्च । प्रथम प्रथम । शर्व शर्व । इति द्वात्रिंशत्पदानि ।

बीजे उवौ त्रयो मन्त्रा वामदेवशिरश्शिखाः ॥१२८॥

गान्धारी च सुषुम्ना च नाड्यौ द्वौ मारुतौ तथा ।
समानोदाननामानौ रसनापायुरिन्द्रिये ॥ १२९ ॥

रसस्तु विषयो रूपस्पर्शशब्दरसा गुणाः ।
मण्डलं चार्धचन्द्राभं पुण्डरीकाङ्कितं सितम् ॥ १३० ॥

स्वप्नावस्था[1] प्रतिष्ठायां कारणं गरुडध्वजः ।
प्रतिष्ठान्तर्गतं सर्वं सञ्चिन्त्य भुवनादिकम् ॥ १३१ ॥

---

१. स्वप्नावस्थेति बाह्येन्द्रियोपरतौ मनोबुद्ध्यहङ्कारेषु विद्यमानेषु प्रवर्तमानविषयभोजनमित्यर्थः ।

सूत्रदेहे स्वमन्त्रेण प्रविश्यैनं वियोजयेत् ।

प्रतिष्ठान्तर्गतानां वियोजनक्रमः ।

ओं हां ह्वीं हां प्रतिष्ठाकलापाशाय स्वाहा ।

तेन पूरकेणाङ्कुशमुद्रयाऽऽकर्षयेत्ततः ॥ १३२ ॥

ओं हौं हां ह्वीं हां हौं प्रतिष्ठाकलापाशाय हुंफट् ।

इत्यनेन संहारमुद्रया कुम्भकेन हृदयादधो नाभिसूत्रमादाय ओं हां ह्वीं हां प्रतिष्ठाकलापाशाय नमः इत्यनेनोद्भवमुद्रया रेचकेण कुण्डे समारोपयेत् । ओं हां ह्वीं हां प्रतिष्ठाकलापाशाय नमः इत्यनेनार्घ्यं दत्वा सम्पूज्य स्वाहान्तेनाऽऽहुतित्रयेण सन्तर्प्य सन्निधाप्य त्रयेणैव ततः ओं हां विष्णवे नमः इति विष्णुमावाह्य सम्पूज्य सन्तर्प्य,

विष्णो तवाऽधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयाऽनुकूलेन विष्णुं विज्ञापयेदिति ॥ १३३ ॥

ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् ।
आवाह्याभ्यर्च्य सन्तर्प्य शिष्यं वक्षसि ताडयेत् ।।

ओं हां हं हां हुंफट् ।

प्रविशेद्दीपनेनैव चैतन्यं विभजेत्ततः ।
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाङ्कुशमुद्रया ॥ १३५ ॥

ओं हां हं हां हः हुंफट् ।

स्वाहान्तेन हृदाऽऽकृष्य तेनैव पुटिताऽऽत्मना ।
गृहीत्वा तन्नमोऽन्तेन निजमात्मनि योजयेत् ॥१३६॥

पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ।
वामया तदनेनैव देवीगर्भे नियोजयेत् ॥ १३७ ॥

ओं हां हं हां आत्मने नमः ।

देहोत्पत्तौ हृदा पञ्च शिरसा जन्मने तथा ।
शिखया चाधिकाराय भोगाय कवचाणुना ॥ १३८ ॥

लयाय शस्त्रमन्त्रेण स्रोतश्शुद्ध्यै शिवाणुना ।
तत्त्वशुद्ध्यै हृदा त्वेवं गर्भाधानादि पूर्ववत् ॥ १३९ ॥

शिरसा पाशशुद्ध्यै च निष्कृत्यै च शतं यजेत् ।
मलशक्तितिरोधाने पञ्चास्त्रेणाऽऽहुतीर्यजेत् ॥ १४० ॥

एवं पाशवियोगेऽपि ततस्सप्तास्त्रजप्तया ।
च्छिन्द्यादस्त्रेण कर्तर्या[1] कलाबीजवता यथा ॥ १४१ ॥

ओं ह्रीं प्रतिष्ठाकलापाशाय हः हुंफट् ।

विसृज्य वर्तुळीकृत्य पाशमन्त्रेण पूर्ववत् ।
घृतपूर्णे स्रुवे[2] दत्वा कलास्त्रेणैव होमयेत् ॥ १४२ ॥

---

१. कर्तर्या इति तत्कार्येति मातृकापाठः । २. स्रुचीति क्रिया-क्रमद्योतिका ।

अस्त्रेण जुहुयात्पञ्च पाशाङ्कुरनिवृत्तये ।
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥ १४३ ॥
ओं हः अस्त्राय हुंफट् ।

कारणेश्वराविष्णुसपर्या ।

हृदाऽऽवाह्य हृषीकेशं कृत्वा पूजनतर्पणे ।
पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ १४४ ॥

ओं ह्रां विष्णो रसं शुल्कं गृहाण स्वाहा । इत्याहुतित्रयं दत्वा विज्ञापयेत् ।

निश्शेषदग्धपाशस्य पशोरस्य हरे त्वया ।
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ १४५ ॥
ततो विसृज्य गोविन्दं रौद्र्याऽऽत्मानं नियोजयेत् ।
राहुमुक्तार्धदेशेन चन्द्रबिम्बेन सन्निभम् ॥ १४६ ॥
संहारमुद्रयाऽऽत्मस्थं विधायोद्भवमुद्रया ।
सूत्रे संयोज्य विन्यस्य तोयबिन्दुं यथापुरा ॥ १४७ ॥
विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात्पूर्णां विधानेन प्रतिष्ठास्य विशोधिता ॥ १४८ ॥

विद्याकलाशुद्धिः ।

सन्धानमथ विद्यायां प्राचीनकलया सह ।
कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १४९ ॥

ओं हां ह्रीं ह्रूं हां प्रतिष्ठाविद्याभ्यां नमः इति गळाधस्समभ्यर्च्य,

रागश्च (शुद्ध[1]विद्या च) नियतिः कलया सह ।
कालो माया तथा विद्या तत्त्वानामिति सप्तकम् ॥
रलवाश्शषसा वर्णाष्षड्विद्यायां प्रकीर्तिताः ।
पदानि प्रणवादीनि ह्येकविंशतिसंख्यया ॥ १५१ ॥

ओं । नमः । शिवाय । सर्वप्रभवे शिवाय । ईशान-मूर्धाय । तत्पुरुषवक्त्राय । अघोरहृदयाय । वामदेवगुह्याय । सद्योजातमूर्तये । ओं । नमः । नमः । गुह्यातिगुह्याय । गोप्त्रे । अनिधनाय । सर्वयोगाधिकृताय । सर्वविद्याधिपाय । ज्योतीरूपाय । परमेश्वरपराय । अचेतनाचेतन । व्योमिन् व्योमिन् । इति,

रुद्राणां भुवनानां च स्वरूपमथ कथ्यते ।
प्रथमो वामदेवस्स्यात् ततश्शर्वभवोद्भवाः ॥ १५२ ॥
वज्रदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः ।
बुद्धिः प्रशान्तनामा च परमाक्षरसंज्ञकः ॥ १५३ ॥
शिवश्च सुशिवो बभ्रुरक्षयश्शम्भुरेव च ।
अदृष्टरूपताम(श्च) तथान्यो रूपवर्धनः ॥ १५४ ॥
मनोन्मनो महावीर्यश्चित्राङ्गस्तदनन्तरम् ।
कल्याण इति विज्ञेयाः पञ्चविंशतिसंख्यया ॥१५५॥

---

१. क्रियाक्रमद्योतिकायां शुद्धविद्यातत्त्वं न परिगण्यते । अपि तु पुरुषतत्त्वम् ।

शिखाघोरौ मरौ बीजे नाड्यौ तत्र स्थिते यथा ।
पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥१५६॥

विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी ।
शब्दस्स्पर्शश्च रूपं च त्रय एव गुणास्स्मृताः ॥१५७॥

अत्रस्थात्र सुषुप्तेति[1] रुद्रो देवस्तु कारणम् ।
विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम् ॥ १५८ ॥

ताडनं भेदनं तत्र प्रवेशं च वियोजनम् ।
आकृष्य ग्रहणं कुर्याद्विद्यायां हृत्प्रदेशतः ॥ १५९ ॥

आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ।
रुद्रं कारणमावाह्य विज्ञाप्य[2] च शिशुं प्रति ॥ १६० ॥

पित्रोरावाहनं कृत्वा हृदये ताडयेच्छिशुम् ।
प्रविश्य पूर्वमन्त्रेण तदात्मानं नियोजयेत् ॥ १६१ ॥

आकृष्याऽऽदाय पूर्वोक्तविधिनाऽऽत्मनि योजयेत् ।
वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः ॥ १६२ ॥

कुर्वीत देहसम्पत्तिं जन्माधिकारमेव च ।
भोगं लयं तथा स्रोतश्शुद्धिं तत्त्वविशोधनम् ॥१६३॥

---

१. सुषुप्तेति चक्षुरादीन्द्रियमानसादीन्द्रियप्रवर्तनव्यतिरिक्तं वचनाभावप्रमाणयुक्ताऽऽत्मलक्षणम् । २. विज्ञाप्य च शिशुं प्रति "रुद्र त्वदधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् । भाव्यं त्वयाऽनुकूलेन सदाशिवनियोगत" इति ।

निश्शेषमलकर्मादिपाशबन्धनिवृत्तये ।
निष्कृत्यै च विधानेन यजेत शतमाहुतीः ॥ १६४ ॥

अस्त्रेण पाशशैथिल्यं मलशक्तितिरोधनम् ।
च्छेदनं मर्दनं तेषां वर्तुळीकरणं तथा ॥ १६५ ॥

दाहं तदङ्कुराभावं प्रायश्चित्तं यथोचितम् ।
रुद्रस्याऽऽवाहनं पूजां रूपगन्धसमर्पणम् ॥ १६६ ॥
ओं हां रुद्र रूपगन्धौ शुल्कं गृहाण स्वाहा ।

संश्राव्य[1] शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् ।
विधायाऽऽत्मनि चैतन्यं पाशसूत्रे निवेशयेत् ॥१६७॥

बिन्दुं शिरसि विन्यस्य विसृज्य पितरौ ततः ।
दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ॥ १६८ ॥

पूर्वोक्तविधिना कार्यं विद्यायां ताडनादिकम् ।
सबीजं[2] तु विशेषस्स्यादिति विद्याविशोधनम् ॥१६९॥

शान्तिकलाशुद्धिः ।

कुर्वीत पूर्ववत्तत्र तत्त्ववर्णानि तद्यथा ।
सन्दध्यादधुना विद्यां शान्त्या सार्धं यथाविधि ॥१७०॥

---

१. संश्राव्य शाम्भवीमाज्ञामिति भो भो रुद्र त्वया नास्य यातुः पदमनामयम् । प्रतिबन्धो विधातव्य इत्याज्ञा पारमेश्वरी । २. सबीजं तु विशेषस्स्यादिति उक्तसंयोजनादिकर्मव्यतिरेकेण मायाकर्मसम्बन्धानां पाशवर्गाणां मूलोच्छेदरूपा शुद्धिः कार्या । वाचिककायिकमानसादिकर्मजातस्यात्यन्तबन्धकत्वनिवृत्त्यर्थं मूलेन शतं शतमाहुतीः कुर्यादित्यर्थः ।

शान्तौ तत्त्वद्वयं लीनं तावीश्वरसदाशिवौ ।
हकारश्च क्षकारश्च द्वौ वर्णौ परिकीर्तितौ ॥ १७१ ॥
रुद्रास्समाननामानः भुवनैस्सह तद्यथा ।
प्रभवस्समयः क्षुद्रो विमलश्शिव इत्यपि ॥ १७२ ॥
घनो निरञ्जनोङ्कारौ सुशिवो दीप्तकारणौ ।
त्रिदशेश्वरनामा(च)नौ क्रमशः कालसंज्ञकः ॥ १७३ ॥
सूक्ष्मोंबुजेश्वरश्चेति रुद्राश्शान्तौ प्रतिष्ठिताः ।

व्योमव्यापिने । व्योमरूपाय । सर्वव्यापिने । शिवाय । अनन्ताय । अनाथाय । अनाश्रिताय । ध्रुवाय । शाश्वताय । योगपीठसंस्थिताय । नित्ययोगिने । ध्यानाहराय । इति द्वादशपदानि पुरुषकवचौ मन्त्रौ बीजे बिन्दुयकारौ ।

अलम्बुषायशे नाड्यौ वायू ककरकूर्मकौ ॥ १७४ ॥
इन्द्रिये त्वक्करावस्यां स्पर्शस्तु विषयो मतः ।
गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ॥ १७५ ॥
तुर्यावस्थेति शान्तिस्थं सम्भाव्य भुवनादिकम् ।
विदध्यात्ताडनं भेदं प्रवेशं च वियोजनम् ॥ १७६ ॥
आकृष्य ग्रहणं कुर्याच्छान्तेर्वदनसूत्रतः ।
आत्मन्यारोप्य सङ्गृह्य कलां कुण्डे निवेशयेत् ॥ १७७ ॥

---

१. तुर्यावस्थेति शरीरे विद्यमाने इन्द्रियमानसादिप्राणादीनामुपरतौ चलनादिलयने आत्मज्ञानमात्रं तुर्यावस्थेति भावः ।

ईश त्वदधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयाऽनुकूलेन कुर्याद्विज्ञापनामिति ॥ १७८ ॥
आवाहनादिकं पित्रोश्शिष्यस्य ताडनादिकम् ।
विधायाऽऽदाय चैतन्यं विधिनाऽऽत्मनि योजयेत् ॥१७९॥
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ।
हृत्संपुटाऽत्ममन्त्रेण देवीगर्भे नियोजयेत् ॥ १८० ॥
देहोत्पत्तौ हृदा पञ्च शिरसा जन्महेतवे ।
शिखया चाधिकाराय भोगाय कवचाणुना ॥ १८१ ॥
लयाय शस्त्रमन्त्रेण स्रोतश्शुद्धौ शिवेन च ।
तत्त्वशुद्धौ हृदेत्येवं गर्भाधानादि पूर्ववत् ॥ १८२ ॥
वर्मणा पाशशैथिल्ये निष्कृत्यै च शतं हुनेत् ।
मलशक्तितिरोधाने शस्त्रेणाऽऽहुतिपञ्चकम् ॥ १८३ ॥
एवं पाशवियोगे च ततस्सप्तास्त्रजप्तया ।
च्छिन्द्यादस्त्रेण कर्तर्या पाशान् बीजपथा यथा ॥ १८४ ॥
ओं हौं ह्वौं हौं शान्तिकलापाशाय हः हुंफट् ।
विमृज्य वर्तुळीकृत्य पाशानस्त्रेण पूर्ववत् ।
घृतपूर्णे स्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ १८५ ॥
अस्त्रेण जुहुयात्पञ्च पाशाङ्कुरनिवृत्तये ।
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीर्यथा ॥ १८६ ॥
ओं हः अस्त्राय हुंफट् ।

कारणेश्वरेश्वरसपर्या ।

हृदे[1]श्वरं समावाह्य कृत्वा पूजे[2]नतर्पणे ।
वि[3]दधीत विधानेन तस्मै शुल्कसमर्पणम् ॥ १८७ ॥

ओं हां ईश्वर बुद्ध्यहङ्कारौ शुल्कं गृहाण स्वाहा ।

निश्शेषदग्धपाशस्य पशोरस्येश्वर त्वया ।
न स्थेयं बन्धकत्वेन शिवाऽऽज्ञां श्रावयेदिति ॥१८८॥

विसृजेदीश्वरं देवं रौद्र्याऽऽत्मानं नियोजयेत् ।
ईषच्चन्द्रमिवाऽऽत्मानं विधिनाऽऽत्मनि योजयेत् ॥

सूत्रे संयोजयेदेनमुद्धृत्योद्भवमुद्रया ।
दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥ १९० ॥

विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात्पूर्णां विधानज्ञो निश्शेषविधिपूरणीम् ॥ १९१ ॥

अस्यामपि विधातव्यं पूर्ववत्ताडनादिकम् ।
पूजनं तु विशेषस्स्याच्छुद्धिश्शान्तेरपीरिता ॥ १९२ ॥

शान्त्यतीतकलाशुद्धिः ।

सन्धानं शान्त्यतीताख्यां शान्त्या सार्धं विशुद्धया ।
कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ १९३ ॥

---

१. हृदेति अग्नाविति शेषः । २. पूजनेति संपूज्य तर्पणाहुतीर्दत्वा इत्यर्थः । ३. विदधीतेति पुर्यष्टकशरीरशुद्ध्यर्थमिति भावः ।

ओं हां ह्यैं हौं हाम्। शान्तिशान्त्यतीताभ्यां नमः।[1]

उभे शक्तिशिवे तत्त्वे भुवनाष्टकमिन्धिका।
दीपिका रोचिका चैव मोचिका चोर्ध्वगामिनी॥ १९४॥

व्योमरूपमनाथं च स्यादनाश्रितमष्टकम्।
ओं हां ओं पदमीशानो मन्त्रो वर्णाश्च षोडश॥१९५॥

अकारादिविसर्गान्ता बीजे नादहकारकौ।
कुहू च शङ्खिनी नाड्यौ देवदत्तधनञ्जयौ॥ १९६॥

मारुतौ वचनश्रोत्रे इन्द्रिये विषयो रवः।
शब्दो गुणोऽप्यवस्था तु तुर्यातीताऽत्र[2] पञ्चमी॥ १९७॥

हेतुस्सदाशिवो देव इति तत्त्वादिसञ्चयम्।
सञ्चिन्त्य शान्त्यतीतस्थं विदध्यात्ताडनादिकम्[3]॥१९८॥

कलापाशं समाताड्य फडन्तेन विभिद्य च।
प्रविश्य च नमोऽन्तेन हुंफडन्तेन योजयेत्॥ १९९॥

शिखाहृत्सम्पुटीभूतं स्वाहान्तं सृणिमुद्रया।
पूरकेण समाकृष्य पाशं मस्तकसूत्रितम्॥ २००॥

---

१. शान्तिशान्त्यतीताभ्यां नम इत्यस्य प्रतिनिधित्वेन मातृकायां "इति सन्ताडने" इति पदं विद्यते। २. तुर्यातीतेति शिवरूपत्वप्राप्तिरित्यर्थः। ३. विदध्यात्ताडनादिकं इति.ब्रह्मरन्ध्रादधस्तात् सपुष्पनाराचमुद्रया ताडनं कुर्यादित्यर्थः।

कुम्भकेन समादाय रेचकेनोद्भवाख्यया ।
हृत्सम्पुटनमोन्तेन वह्निकुण्डे निवेशयेत् ॥ २०१ ॥

अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत् ।
सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ २०२ ॥

सादाख्यकेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयाऽनुकूलेन भक्त्या विज्ञापयेदिति ॥२०३॥

पित्रोरावाहनं पूजां कृत्वा तर्पणसन्निधी ।
हृत्सम्पुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ २०४ ॥

ओं हां हं हां हः हुंफट् ।

प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ।
अस्त्रेण पाशसंयुक्तं ज्येष्ठयाङ्कुशमुद्रया ॥ २०५ ॥

ओं हां हं हां हः हुंफट् ।

स्वाहान्तेन हृदाकृष्य तेनैव पुटितात्मना ।
गृहीत्वा तन्नमोन्तेन निजमात्मनि योजयेत् ॥ २०६ ॥

ओं हां हं हां आत्मने नमः ।

पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ।
वामया तमनेनैव देव्या गर्भे नियोजयेत् ॥ २०७ ॥

गर्भाधानादिकं सर्वं पूर्वोक्तविधिना चरेत् ।
मूलेन पाशशैथिल्ये निष्कृत्यै च शतं यजेत् ॥ २०८ ॥

मलशक्तितिरोधाने पाशानां च वियोजने ।
पञ्चपञ्चाहुतीर्दद्यादायुधेन यथा पुरा ॥ २०९ ॥
पाशानायुधमन्त्रेण सप्तवाराभिजप्तया ।
छिन्द्यादस्त्रेण कर्तर्या कलाबीजयुजा यथा ॥ २१० ॥
ओं हौं हौं हौं शान्त्यतीतकलापाशाय हः हुंफट् ।
विसृज्य वर्तुळीकृत्य पाशानस्त्रेण पूर्ववत् ।
घृतपूर्णे स्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ २११ ॥
अस्त्रेण जुहुयात्पञ्च पाशाङ्कुरनिवृत्तये ।
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥ २१२ ॥
सदाशिवं हृदावाह्य कृत्वा पूजनतर्पणे ।
पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ २१३ ॥
ओं हां सदाशिव मनोबिन्दुं[1] शुल्कं गृहाण स्वाहा ।
निश्शेषदग्धपाशस्य पशोरस्य सदाशिव ।
बन्धाय न पुनस्स्थेयं शिवाज्ञां श्रावयेदिति ॥ २१४ ॥
मूलेन जुहुयात्पूर्णां विसृजेच्च सदाशिवम् ।
ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम् ॥ २१५ ॥
संहारमुद्रया रौद्र्या संयोज्य गुरुरात्मनि ।
कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया ॥ २१६ ॥

---

१. मनोबिन्दुं इति मनश्च शब्दादीनां हेतुकीं बिन्दुमयीं शक्तिं चेत्यर्थः ।

दद्यादाप्यायनायास्य मस्तकेऽर्घ्याम्बुबिन्दुकम् ।
क्षमयित्वा महाभक्त्या पितरौ विसृजेत्ततः ॥ २१७ ॥
खेदितौ शिष्यदीक्षायै यन्मया पितरौ युवाम् ।
कारुण्यात्तत्क्षमित्वा मे व्रजतं स्थानमात्मनोः ॥२१८॥

शिखाछेदक्रमः ।

शिखामन्त्रितकर्तर्या रोधशक्तिस्वरूपिणीम् ।
शिखां छिन्द्यात् शिखास्त्रेण[1] शिष्यस्य चतुरङ्गुलाम् ॥
ओं हूं शिखायै हः हुंफट् । ओं हः अस्त्राय हुंफट् ।

शिखाछेदानन्तरकरणीयाविधिः ।

प्रक्षाळ्य स्रुक्स्रुवौ शिष्यं संस्नाप्याचम्य च स्वयम् ।
योजनिकार्थमात्मानं शस्त्रमन्त्रेण ताडयेत् ॥ २२० ॥
वियोज्याऽऽकृष्य सङ्गृह्य पूर्ववत् द्वादशान्ततः ।
आत्मीयहृदयाम्भोजकर्णिकायां निवेशयेत् ॥ २२१ ॥
पूरितां स्रुचमाज्येन निहिताधोमुखस्रुवाम् ।
नित्योक्तविधिनाऽऽदाय शङ्खसन्निभमुद्रया ॥ २२२ ॥
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः ।
समदृष्टिस्स्थिरश्शान्तः परभावसमन्वितः ॥ २२३ ॥
कुण्डमण्डलवह्निभ्यश्शिष्यादपि निजात्मनः ।
गृहीत्वा षड्विधाध्वानं स्रुगग्रे प्राणनाडिकाम् ॥२२४॥

---

१. शिवास्त्रेणेति मातृकापाठः ।

## प्राणविषुवादिसप्तविषुवस्वरूपनिरूपणम् ।

संचिन्त्य विषुवं ध्यात्वा क्रमशस्सप्तधा यथा ।
प्रथमं प्राणसंयोगस्वरूपमपरं पुनः ॥ २२५ ॥

हृदयादिक्रमोच्चारविशिष्टं मन्त्रसंज्ञकम् ।
सुषुम्नायां तु तन्नादस्वरूपं तु तृतीयकम् ॥ २२६ ॥

सप्तमे कारणत्यागात्प्रशान्तविषुवं लयः ।
शक्तिनादोर्ध्वसञ्चारस्तच्छक्तिविषुवं मतम् ॥ २२७ ॥

प्राणस्य निखिलस्याऽपि शक्तिप्रमेयवर्जितम् ।
तत्कालविषुवं षष्ठं शक्त्यतीतं तु सप्तमम् ॥ २२८ ॥

---

१. **प्राणसंयोगेति** शिष्यात्मप्राणमनस्संयोगः प्राणविषुवमित्याहुः । २. **हृदयादिक्रमेति** हृदयादिस्थानेषु अकारौकारादीनां मात्राणां संयोगवियोगक्रमोच्चारणविशिष्टं प्रासादमन्त्रं ब्रुवन्नित्यर्थः । एतन्मन्त्रविषुवमित्याहुः । ३. **सुषुम्नायां तु तन्नादेति** मेढ्रकन्दनाभिहृदयगळघण्टिकाभ्रूमध्यललाटब्रह्मरन्ध्रद्वादशान्ताख्यग्रन्थिदशकभेदतस्सुषुम्नानुगतनादप्रवाहचिन्तनं नाडीविषुवमित्युच्यते । यदाहुः "नादनाडीसमायोगात् तन्नाडीविषुवं मतम्" इति । ४. **सप्तमे कारणत्यागात्** इति कारणेषु ब्रह्मादिषु अकारौकारमकारबिन्दुनादनादान्तस्थानषट्कत्यागात् सप्तमे शक्तिस्थाने नादस्य लयः चतुर्थं प्रशान्तविषुवमित्युच्यते । ५. **शक्तिनादोर्ध्वसञ्चार** इति शक्तिमध्यगतस्य नादस्य यावदूर्ध्वं सञ्चारः पञ्चमं शक्तिविषुवमित्युच्यते । ६. **प्राणस्य निखिलस्यापीति** यदाहुः "शक्तिमध्यगतो यावत् नाद ऊर्ध्वं प्रसर्पति । तच्छक्तिविषुवं कालमुन्मनान्तं ततः परम्" इति । ७. **शक्त्यतीतमिति** उन्मनाख्यशक्त्यतिक्रान्तं इत्यर्थः ।

तदेतद्योजनास्थानं विषुवं तत्त्वसंज्ञकम् ।
पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ॥२२९॥

मूलोच्चारणे हकारादिविलङ्घनक्रमः ।

शनैरुदीरयन् मूलं कृत्वा शिष्यात्मनो लयम् ।
हकारे तटिदाकारे षडध्वप्राणरूपिणि ॥ २३० ॥

हकारं परतो नाभेस्सर्वतो व्याप्य संस्थितम् ।
ततः [1]परमकारं तु हृदयाच्चतुरङ्गुलम् ॥२३१॥

उकारं वाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठकम् ।
चतुरङ्गुलतालुस्थं मकारं रुद्रवाचकम् ॥ २३२ ॥

तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् ।
नादं सदाशिवं देवं ब्रह्मरुद्रावसानकम् ॥ २३३ ॥

शक्तिञ्च ब्रह्मरन्ध्रस्थां त्यजेदित्थमनुक्रमात् ।
दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवाऽनुभूय च ॥२३४॥

द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे ।
[2]भावशून्ये मनोऽतीते शिवे नित्यगुणोदये ॥ २३५ ॥

विलीयमानमेतस्मिन् शिष्याऽऽत्मानं विभावयेत् ।
विमुञ्चन् सर्पिषो धारां ज्वाला[3]न्तेऽपि परे शिवे ॥२३६॥

---

१. परं मकारं इति मातृकापाठः । २. भावशून्ये इति सदाशिवाद्याकारशून्ये इत्यर्थः । ३. ज्वालान्ते अग्निशिखान्ते ।

योजनिकास्थिरत्वाय वौषडन्तशिवाणुना ।
दत्वा पूर्णां विधानेन गुणापादनमाचरेत् ॥ २३७ ॥

सर्वज्ञत्वादिगुणोत्तेजनविधिः ।

ओं हां आत्मन् सर्वज्ञो भव स्वाहा । ओं हीं आत्मन् परितृप्तो भव स्वाहा । ओं हूं आत्मन् अनादिबोधो भव स्वाहा । ओं हैं आत्मन् स्वतन्त्रो भव स्वाहा । ओं हौं आत्मन् अलुप्तशक्तिर्भव स्वाहा । ओं हः आत्मन् अनन्तशक्तिर्भव स्वाहा ।

शिष्यदेह आत्मसंयोजनविधिः ।

इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् ।
विधिना भावनोपेतश्शिष्यदेहे नियोजयेत् ॥ २३८ ॥

इत्थं च शक्तिसम्पातजनितश्रमशान्तये ।
शिष्यमूर्धनि विन्यस्य पश्चादमृतबिन्दुकम् ॥ २३९ ॥

आत्मसंयोजनानन्तरकरणीयविधिः ।

प्रणामय्येशकुम्भादीन् शिवाद्दक्षिणमण्डले ।
सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिण आत्मनः ॥२४०॥

त्वयैवाऽनुगृहीतोयं मूर्तिमास्थाय मामकीम् ।
देवे वह्नौ गुरौ तस्मात् भक्तिं नाथास्य वर्धय ॥२४१॥

इति विज्ञाप्य देवेशं प्रणम्य च गुरुस्स्वयम् ।
श्रेयस्तवास्त्विति ब्रूयादाशिषं शिष्यमादरात् ॥ २४२ ॥

ततः परमया भक्त्या दत्वा देवेऽष्टपुष्पिकाम् ।
पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥ २४३ ॥
गोळक्यामाधिपत्येन तिष्ठता सोमशम्भुना ।
क्रियाकाण्डक्रमावळ्यां दीक्षा निर्वाणदोदिता ॥२४४-
[१०११॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
निर्वाणदीक्षाविधिस्समाप्तः ।



॥ श्रीः ॥

# अथ त्रितत्त्वदीक्षा

## शिष्यस्याऽधिवासनविधिः ।

अथ त्रितत्त्वदीक्षायास्स्वरूपमधुनोच्यते ।
यागालयकृतं कर्म कुर्वीताऽत्राऽपि पूर्ववत् ॥ १ ॥

आत्मकुम्भशिवज्योतिश्शिष्यदेहेष्वनुक्रमात् ।
त्रितत्त्वन्यासमारभ्य शिवाग्न्यन्तां क्रियां स्मरेत् ॥२॥

शिष्यप्रवेशहोमान्तं मन्त्राणां दीपनादिकम् ।
विधाय पूर्ववत्सर्वं कृत्वा सूत्राऽवलम्बतः ॥ ३ ॥

शक्तिं शिरसि शिष्यस्य सम्पूज्याऽऽदाय मुद्रया ।
विधिना योजयेत्सूत्रे यथा हौं शक्तये नमः ॥ ४ ॥

ततोऽवकुण्ठनं तस्य तर्पणं च विधानतः ।
कुर्यात् षडध्वविन्यासं यथा पूर्वमुदाहृतम् ॥ ५ ॥

शिष्यं प्रोक्षितमाताड्य संप्रविश्य वियोज्य च ।
समाकृष्य विधानेन शक्तिसूत्रे नियोजयेत् ॥ ६ ॥

ओं हां हं हां आत्मने नमः ।

विधाय मूर्तिविन्यासं कृत्वार्चां तर्पणादिकम् ।
पूर्वोक्तेन विधानेन शिवतत्त्वं विलोकयेत् ॥ ७ ॥
ओं हूं शिवतत्त्वाय नमः ।
सन्ताड्य हुंफडन्तेन गृहीत्वा हृत्पुटेन च ।
अनेनैव नमोन्तेन शिरस्सूत्रे नियोजयेत् ॥ ८ ॥
शिवतत्त्वं समभ्यर्च्य कवचेनावकुण्ठयेत् ।
सन्तर्प्योक्तविधानेन विद्यातत्त्वं विलोकयेत् ॥ ९ ॥
ओं हीं विद्यातत्त्वाय नमः ।
सन्ताड्याऽऽदाय संस्थाप्य पूजयित्वाऽवकुण्ठयेत् ।
सन्तर्प्य च यथापूर्वमात्मतत्त्वं विलोकयेत् ॥ १० ॥
ओं हां आत्मतत्त्वाय नमः ।
पूर्वोक्तविधिनात्राऽपि कृत्वा सन्ताडनादिकम् ।
तर्पणाय पुनर्दद्यादाहुतीनां त्रयं त्रयम् ॥ ११ ॥
शिवतत्त्वादिकान् पाशान् हुंफडन्तैः प्रदीपयेत् ।
हृल्ललाटान्तयोस्सूत्रं सम्मृज्यात्कुङ्कुमादिभिः ॥ १२ ॥
ओं हूं हूं शिवतत्त्वाय हूं हुं फट् इत्यादि दीपने ।
सूत्रेऽभ्यर्च्य शिवं साङ्गं भित्वा पाशाननुक्रमात् ।
कुर्वीत शिष्यहृद्बीजैस्तेषां ग्रहणबन्धने ॥ १३ ॥
शिष्यस्य दक्षिणस्कन्धे तत्सूत्रं विनिवेशयेत् ।
हुत्वा होमं षडङ्गेन दद्यात्पूर्णां शिवाणुना ॥ १४ ॥

सत्पात्रं सम्पुटं मन्त्रैस्सूत्रं सम्पातसंस्कृतम् ।
रक्षार्थं शिवकुम्भाय विधिना विनिवेशयेत् ॥ १५ ॥
पञ्चगव्यं चरुं दत्वा पूर्ववद्बलिपूर्वकम् ।
दन्तकाष्ठपरीक्षाद्यं कृत्वा तु स्थापयेच्छिशुम् ॥ १६ ॥
क्रियासमर्पणं कृत्वा चरुकं प्राश्य पूर्ववत् ।
स्मरन् दीक्षाक्रमं स्वप्याद्विधिरित्यधिवासने ॥ १७ ॥

त्रितत्त्वदीक्षायां परेद्युः करणीयविधिः
तत्रादावात्मतत्त्वशोधनम् ।

प्रातर्निर्वर्तिताऽशेषनित्यनैमित्तिकक्रमम् ।
प्रवेश्य पूर्ववच्छिष्यं कुण्डपार्श्वे निवेशयेत् ॥ १८ ॥
विधाय नाडीसन्धानं सम्पातं चास्य मस्तके ।
शिखायां सूत्रमाबध्य पुनस्तमुपवेशयेत् ॥ १९ ॥
आत्मतत्त्वं विलोक्यैतद्व्यापकं षड्विधाध्वनः ।
हृदन्तर्व्यापि शिष्यस्य ताडयेदाददीत च ॥ २० ॥
मनसा निक्षिपेद्वह्नौ तर्पयेदपि पूर्ववत् ।
ततो ब्रह्माणमावाह्य यजेद्विज्ञापयेदपि ॥ २१ ॥
ताडयित्वाऽस्त्रपुष्पेण हृत्सूत्रे शिष्यचेतनम् ।
प्रवेशनादिकं कृत्वा गुरुरात्मनि योजयेत् ॥ २२ ॥
द्वादशान्तात्तमादाय देवीगर्भे नियोजयेत् ।
सम्पूज्य तर्पयित्वा च संस्कारविधिमाचरेत् ॥ २३ ॥

जन्माधिकारभोगेषु लयस्स्रोतोविशुद्धये ।
मायेयाणवकर्मादिपाशशैथिल्यहेतवे ॥ २४ ॥
विधानेनाथ निष्कृत्यै शिवेनाङ्गवता यजेत् ।
मलशक्तितिरोधाने भावकर्मनिरोधने ॥ २५ ॥
पाशविश्लेषणार्थं च क्रमादस्त्रेण होमयेत् ।
सप्तास्त्रजप्तकर्तर्या पाशतत्त्वायुधाणुना ॥ २६ ॥
छित्वा विमृज्य विन्यस्य स्रुगग्रे वर्तुळीकृतम् ।
ओं हां आत्मतत्त्वाय हः हुंफट् ।
दहेच्च तमनेनैव पाशाङ्कुरनिवृत्तये ॥ २७ ॥
प्रायश्चित्ताय शस्त्रेण हुत्वा शुल्कं समर्पयेत् ।
ओं हां ब्रह्मन् गन्धरसरूपस्पर्शशब्दान् शुल्कं गृहाण स्वाहा ।
विज्ञाप्याप्रतिबन्धाय विसृजेत्कमलासनम् ॥ २८ ॥
आत्मन्याधाय चैतन्यं मुखसूत्रे नियोजयेत् ।
अर्घ्याम्बुबिन्दुमारोप्य शिष्यशीर्षे सुधोपमम् ॥ २९ ॥
प्रदद्याद्विधिना पूर्णामात्मतत्त्वं विशोधितम् ।

आत्मतत्त्वाविद्यातत्त्वाविशोधनक्रमः ।

ओं हां हीं आत्मतत्त्वविद्यातत्त्वाभ्यां नमः ।
शुद्धाशुद्धानुसन्धानं ह्रस्वदीर्घप्रयोगतः ॥ ३० ॥

विधाय निजमन्त्रेण विद्यातत्त्वं विलोकयेत् ।
ललाटपट्टपर्यन्तं विद्यातत्त्वं विशोधितम् ॥ ३१ ॥
षडध्वव्यापकं ध्यात्वा विदध्यात्ताडनादिकम् ।
अथ माधवमावाह्य यजेद्विज्ञापयेदपि ॥ ३२ ॥
पूर्ववन्मुखसूत्रस्थं ताडयेच्छिष्यचेतनम् ।
प्रवेशनादिकं कृत्वा गुरुरात्मनि योजयेत् ॥ ३३ ॥
द्वादशान्तात्तमादाय देवीगर्भे नियोजयेत् ।
जन्माधिकारभोगाद्यं कुर्यान्मूलेन पूर्ववत् ॥ ३४ ॥
आयुधेन मलादीनां तिरोधानाद्यमाचरेत् ।
पाशं संछिद्य कर्तर्या पूर्वोक्तविधिना दहेत् ॥ ३५ ॥
प्रायश्चित्तं तथा हुत्वा विष्णोश्शुल्कं समर्पयेत् ।
ओं हां विष्णो बुद्ध्यहङ्कारररूपं शुल्कं गृहाण स्वाहा ।
विज्ञाप्याप्रतिबन्धाय विसृजेत् गरुडध्वजम् ॥ ३६ ॥
आत्मन्याधाय चैतन्यं शिरस्सूत्रे निवेशयेत् ।
अर्घ्याम्बुबिन्दुमारोप्य शिष्यशीर्षे सुधोपमम् ॥ ३७ ॥
ददीत विधिना पूर्णां विद्यातत्त्वं विशोधितम् ।

आत्मविद्याशिवतत्त्वशोधनविधिः ।

सन्धायानेन तत्त्वेन शिवतत्त्वं विलोकयेत् ॥ ३८ ॥
शिखान्तव्यापि शिष्यस्य व्यापकं षड्विधाध्वनः ।
सन्ताड्य तत्त्वमादाय वह्नौ निक्षिप्य तर्पयेत् ॥ ३९ ॥

शिवस्याऽऽवाहनं पूजां तर्पणं विधिनाऽऽचरेत् ।
तव रुद्राधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ॥ ४० ॥

भाव्यं त्वयाऽनुकूलेन रुद्रं विज्ञापयेदिति ।
शिशोः प्रविश्य चैतन्यं कृत्वात्मस्थं विधानतः ॥४१॥

निस्सार्य द्वादशान्तेन देवीगर्भे नियोजयेत् ।
जन्मादिनिष्कृतिं यावन्मूलेनाङ्गवता चरेत् ॥ ४२ ॥

आयुधेन मलादीनां तिरोधानादि साधयेत् ।
पाशस्य छेदनं दाहं प्रायश्चित्तं च पूर्ववत् ॥ ४३ ॥

विधाय रुद्रमभ्यर्च्य कुर्याच्छुल्कसमर्पणम् ।
ओं हां रुद्र मनोबिन्दुस्वरूपं शुल्कं गृहाण स्वाहा ।
सन्तर्प्य विसृजेदीशं निवेश्याऽऽत्मानमात्मनि ॥४४॥

रेचकेनादिसंसिद्धं[१] शिष्यदेहे नियोजयेत् ।
शिरस्यर्घ्याम्बुबिन्दुं च दद्यात्पूर्णां विधानतः ॥ ४५ ॥

विशुद्धं शिवतत्त्वं च पूर्वोक्तविस्तरं स्मरेत् ।
तत ओं हूं शिखायै हः हुंफट् इत्येवं सम्प्रजप्तया ॥

कर्तर्या शिवशस्त्रेण संछिन्द्यात्पूर्ववच्छिखाम् ।
वेष्टितां गोमयेनैतां सघृतायां स्रुचि स्थिताम् ॥ ४७ ॥

---

१. रेचकेनातिसंशुद्धमिति स्थातव्यमिति भाति ।

शिखा हुत्वा विधानेन स्रुक्स्रुवौ क्षाळयेज्जलैः ।
स्वयं सद्भस्मना स्नातस्स्नापयेच्छिष्यमम्बुभिः ॥ ४८ ॥

योजनाय तदात्मानं पुनरात्मनि योजयेत् ।
पूर्वोक्तविधिनाऽऽदाय स्रुक्स्रुवावूर्ध्वविग्र(हात्) ॥४९॥

ब्रह्मादिकारणत्यागक्रमान्मूलमुदीरयन् ।
शिवोऽहमित्यहङ्कारी बोधरूपे परे शिवे ॥ ५० ॥

विमुञ्चन् सर्पिषो धारां शिष्यात्मानं नियोजयेत् ।
तद्गुणाऽऽपादनं कृत्वा यथापूर्वमुदाहृतम् ॥ ५१ ॥

सम्पातेन तदात्मानं शिष्यदेहे नियोजयेत् ।
भक्तिविज्ञापनं कृत्वा शिष्यं संस्नापयेद्बहिः ॥ ५२ ॥
वर्धन्या कलशेनाथ दीक्षोक्तेति त्रितत्त्विका ॥ १०६३ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
त्रितत्त्वदीक्षाविधिस्समाप्तः ।

---

# अथ एकतत्त्वदीक्षाविधिः ।

अथैकतात्त्विका दीक्षा लघुत्वादुपदिश्यते ।
सूत्रबन्धादि कुर्वीत यथायागं निजाणुना ॥ १ ॥

---

१. विग्रहादिति विग्रहः इति स्थातव्यमिति भाति ।

कालाग्न्यादिशिवान्तानि तत्वानि परिभावयेत् ।
शिवतत्त्वे समग्राणि सूत्रे मणिगणानिव ॥ २ ॥

आवाह्य शिवतत्त्वादि गर्भाधानादि पूर्ववत् ।
मूलेन किंतु कुर्वीत सर्वशुल्कसमर्पणम् ॥ ३ ॥

प्रददीत ततः पूर्णां तत्त्वव्रातोपगर्भिताम् ।
एकयैव यया शिष्यो निर्वाणमधिगच्छति ॥ ४ ॥

योजनाय शिवेचान्यतस्थिरत्वापादनाय च ।
दत्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥ ५ ॥

दीक्षात्रयं त्रिणयनाऽऽहितमानसेन
लोकत्रयप्रथितकीर्तिवितानकेन ।
संसारसागरनिमज्जदनल्पजन्तू
नुद्धर्तुमाशु रचितं शशिशङ्करेण ॥ ६-१०६९ ॥

क्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
एकतत्त्वदीक्षाविधिः समाप्तः ।

---

॥ श्रीः ॥

# आचार्याभिषेकविधिः ।

---

अथाभ्यर्च्य महेशानं पूर्वोक्तविधिना गुरुः ।
श्रुतशीलोपपन्नस्य विदध्यादभिषेचनम् ॥ १ ॥

## अभिषेककुम्भस्थापनविधिः ।

कुम्भानीशादिकाष्ठासु क्रमेण नव विन्यसेत् ।
समग्रासनकान् पञ्चरत्नौषध्यक्षतान्वितान् ॥ २ ॥
चन्दनच्छुरितांश्[1]चूत[2]पल्लवास्यान् सलक्षणान् ।
पवित्रतोयसम्पूर्णान् वस्त्रालङ्कारभूषितान् ॥ ३ ॥
तेषु क्षारोदधिक्षीरदध्यो(द)कघृतसागरान् ।
इक्षुकादम्बरीस्वादुगर्भोदानष्टसागरान् ॥ ४ ॥
निवेशयेद्यथासंख्यानष्टौ विद्येश्वरानथ ।
पूर्वं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥ ५ ॥
त्रिमूर्तिमेकरुद्राख्यमेकनेत्रं शिवोत्तमम् ।
सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥ ६ ॥

---

१. चन्दनच्छुरितानिति सितचन्दनचर्चितानिति भावः । २. चूतपल्लवास्यानिति यदाहुः "चूतपत्रस्य संख्या च द्वात्रिंशत्पञ्चविंशतिः । षोडशैकादशं चैव नवसप्तकपञ्चकम् । रक्तपल्लवमेवोक्तं अथवा श्याम-वर्णकम् । सलक्षणं च सङ्गृह्य कुम्भमध्ये प्रदापयेत् ।" इति ।

मध्ये शिवसमुद्रं च शिवमन्त्रं च विन्यसेत् ।
अथवा पञ्चभिः कुम्भैर्निवृत्यादिकलान्वितैः ॥ ७ ॥
शिववत्पूजितैस्साष्टशतमूलाभिमन्त्रितैः ।
अथवैकेन कुम्भेन तादृशेनाभिषेचनम् ॥ ८ ॥
पश्चिमोत्तरयाम्यासु पूर्वस्यां च निवेशयेत् ।
क्रमात्कुम्भांस्ततस्तेषु समुद्राणां द्वयं द्वयम् ॥ ९ ॥
तथा विद्येश्वराणां च द्वितयं द्वितयं क्रमात् ।
ऐशान्यां पञ्चमे न्यस्य शिवमन्त्रं शिवाम्बुधिम् ॥ १० ॥
एकत्र कलशे पत्रपुटे वाऽष्टौ पयोनिधीन् ।
तथा विद्येश्वरानष्टौ सर्वत्राङ्गयुतं शिवम् ॥ ११ ॥

शिष्याभिषेकक्रमः ।

यागालयाद्दिशीशस्य रचिते स्नानमण्टपे ।
कुर्यात्करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् ॥ १२ ॥
श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ।
शिष्यं निवेश्य पूर्वास्यं सकळीकृत्य पूजयेत् ॥ १३ ॥
काञ्चिकौदनमृद्भस्मदूर्वागोमयगोळकैः ।
सिद्धार्थदधितोयैश्च कुर्यान्निर्मर्चनं ततः ॥ १४ ॥
क्षारोदादिक्रमेणाथ क्रमाद्विद्येशसम्भवैः ।
कलशैस्स्नापयेच्छिष्यं सुधाधारणयान्वितः ॥ १५ ॥

१. श्रीपर्णाद्यासने श्रीपर्णिकादिदारुकृतपीठे ।

अभिषेकानन्तराधिकारसमर्पणविधिः ।

परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ।
पूर्वोदितासने शिष्यं पुनः पूर्ववदर्चयेत् ॥ १६ ॥

उष्णीषं मकुटं छत्रं पादुकाचामराणि च ।
गजाश्वशिबिकादीनि कर्तरीं करणीं घटीम् ॥ १७ ॥

अक्षमालां च दर्भांश्च स्रुक्स्रुवौ पुस्तकादि च ।
अधिकारं गुरुस्तस्मै शिष्याय विनिवेदयेत् ॥ १८ ॥

दीक्षाव्याख्या[1]प्रतिष्ठाद्यं ज्ञात्वाद्यप्रभृति त्वया ।
सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति ॥ १९ ॥

शिवं प्रति विज्ञापनप्रकारः ।

अभिवाद्य[2] ततश्शिष्यः प्रणिपत्य महेश्वरम् ।
विघ्नजालापनोदार्थं कुर्याद्विज्ञापनं यथा ॥ २० ॥

अभिषेकार्थमादिष्टस्त्वयाहं गुरुमूर्तिना ।
संहितापारगस्सोयमभिषिक्तो मया शिव ॥ २१ ॥

शिवं प्रति विज्ञापनानन्तरकरणीयविधिः ।

तृप्तये मन्त्र[3]चक्रस्य पञ्च पञ्चाहुतीर्यजेत् ।
दद्यात्पूर्णां ततश्शिष्यं स्थापयेन्निजदक्षिणे ॥ २२ ॥

---

१. व्याख्या शिवागमाध्यापनम् । २. अभीति निरधिकार-समर्पणे गुरुश्शिष्यमिति शेषः । ३. मन्त्रचक्रस्येति संहितामन्त्रस्येत्यर्थः ।

शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुळीः क्रमात् ।
लांच्छयेदूषरत्वाय दग्धदर्भाङ्गशम्बरैः ॥ २३ ॥

कुसुमानि करे दत्वा प्रणामं कारयेदमुम् ।
कुम्भेऽनले शिवे स्वस्मिन् ततस्तत्[1]कृत्यमादिशेत् ॥

शिवाग्रे शिष्याय आचार्यचर्यानिर्देशः ।

अनुग्राह्यास्त्वया शिष्याश्शास्त्रदृष्टेन कर्मणा ।
श्रोतव्यं च शिव[2]ज्ञानं श्रावणीयं तदर्थिनाम् ॥ २५ ॥

संवत्सरोषिते शिष्ये दीक्षां निर्वर्तयेद्बुधः ।
[3]स्वल्पमह्नि जपं कुर्यात् स्वल्पमग्नौ च होमयेत् ॥२६॥

स्वल्पं वै ध्यानमातिष्ठेन्मन्त्र एष सदा गुरोः ।
इत्याचार्याभिषेकोऽयं कथितस्सोमशम्भुना ॥२७-१०९६॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
अचार्याभिषेकक्रमस्समाप्तः ।



---

१. तत्कृत्यमिति शिवाग्रे शिष्यस्य कर्तव्यतामादिशेदित्यर्थः ।
२. शिवज्ञानं शिवागम इति भावः । ३. स्वल्पमाह्नि इति प्रतिदिनमल्पेन जपहोमपूजादिकरणेनापि अलुप्तनिजाह्निकस्तिष्ठेदित्यर्थः ।

# साधकाभिषेकविधिः ।

साधकस्याभिषेके तु निवृत्त्यादिकलात्रयम् ।
मुमुक्षोरिव संशोध्य शान्त्यतीतां विशोधयेत् ॥ १ ॥

ततस्सदाशिवं ध्यात्वा मूलमन्त्रेण पूर्णया ।
शान्तौ संयोज्य कुर्वीत गुणापादनमष्टधा ॥ २ ॥

ओं हौं आत्मन् अणिमा ते भवतु स्वाहा । ओं हौं आत्मन् लघिमा ते भवतु स्वाहा । ओं हौं आत्मन् महिमा ते भवतु स्वाहा । ओं हौं आत्मन् गरिमा ते भवतु स्वाहा । ओं हौं आत्मन् प्राप्तिस्ते भवतु स्वाहा । ओं हौं आत्मन् प्राकाम्यं ते भवतु स्वाहा । ओं हौं आत्मन् ईशित्वं ते भवतु स्वाहा । ओं हौं आत्मन् वशित्वं ते भवतु स्वाहा । ओं हौं आत्मन् यत्र कामावसानस्ते भवतु स्वाहा ।

पूर्ववद्योजनीं कृत्वा पञ्चभिः कलशैस्ततः ।
कृतपञ्चकलान्यासैस्साध्यशम्बरपूजितैः ॥ ३ ॥

मूलस्याष्टशतालब्धैरभिषिच्य यथाक्रमम् ।
पर्यन्ते शान्तिकुम्भेन पञ्चमेनाभिषेचयेत् ॥ ४ ॥

विन्यस्ताष्टसमुद्रैर्वा साध्याणुशतमन्त्रितैः ।
पूर्वाद्यैरष्टभिः कुम्भैरेचकोद्भवमुद्रया ॥ ५ ॥

उदङ्मुखासनस्थस्य चित्ते कृत्वाणिमादिकम् ।
ददीत साध्यमन्त्रेण साधकस्याभिषेचनम् ॥ ६ ॥

निवेश्य दक्षिणे शम्भोस्सकळीकृत्य पूर्ववत् ।
उष्णीषकर्तरीहीनमधिकारं समर्पयेत् ॥ ७ ॥

साध्यमन्त्रं समुच्चार्य प्रणवाद्यन्तदीपितम् ।
रेचकोद्भवया दद्यात् पुष्पादियुतमञ्जलौ ॥ ८ ॥

महाप्रसाद इत्युक्त्वा शरदिन्दुसमज्वलम् ।
पूरकेण हृदम्भोजे साधकस्तान्निवेशयेत् ॥ ९ ॥

सन्तर्प्य पावकेऽभ्यर्च्य साध्यशम्बरसंहिताम् ।
दक्षिणे मण्डलादीनां पद्मे साध्याणुमर्चयेत् ॥ १० ॥

गुरोरासादितानुज्ञो विहिताष्टाङ्गसन्नतिः ।
पुण्यकाले मुहूर्ते च मन्त्राराधनमाचरेत् ॥ ११ ॥

अणिमादिप्रसिद्ध्यर्थं घृतस्य पयसोऽथवा ।
गुग्गुलोश्चाथ साहस्रं शतं वा होममाचरेत् ॥ १२ ॥

आगमार्थाविसंवादि पारम्पर्यक्रमागतम् ।
श्रीसोमशम्भुनाऽकारि साधकस्याभिषेचनम्
॥ १३-११०९ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
साधकाभिषेकक्रमस्समाप्तः ।

---

# अस्त्राभिषेकविधिः ।

नृपतीनां नराणां च [1]वन्ध्यादीनां च योषिताम् ।
महाविघ्नाभिभूतानां सद्यश्शान्तिकरं परम् ॥ १ ॥
लक्ष्मीविजयसौभाग्यधर्माभीष्टफलप्रदम् ।
आगमार्थाविसंवादि लिख्यतेऽस्त्राभिषेचनम् ॥ २ ॥

अस्त्रार्चनमन्त्रक्रमः ।

ओं [2]पाशुपतास्त्रासनाय हुंफण्णमः । ओं पाशुपतास्त्रमूर्तये हुंफण्णमः । ओं हुं नेत्रेभ्यो हुंफण्णमः । इत्यासनमूर्तिनेत्रमन्त्रैः सम्पूज्य ओं श्लीं पं शूं हुं फट् पाशुपतास्त्राय नमः इत्यावाह्य स्थापनादिकाः कृत्वा ओं ओं अस्त्रहृदयाय हुंफण्णमः । ओं श्लीं अस्त्रशिरसे हुंफण्णमः । ओं पं अस्त्रशिखायै हुंफण्णमः । ओं शूं अस्त्रकवचाय हुंफण्णमः । ओं हुं अस्त्रनेत्रेभ्यो हुंफण्णमः । ओं फट् अस्त्राय हुंफण्णमः इत्यङ्गानि विन्यसेत् ।

सकृन्मन्त्रं समुच्चार्य शरीरे विन्यसेद्बुधः ।
अङ्गानि विन्यसेत्पश्चादोङ्कारादिनमोन्तकम् ॥ ३ ॥

---

१. वन्ध्यादीनामिति अप्रजादीनामित्यर्थः । २. मातृकायामस्त्रमूलमन्त्राङ्गमन्त्रक्रम एवं विद्यते । ओं श्लीं पशूं हुंफण्णमः । ओं हां हृदयाय हुंफण्णमः । ओं हां शिरसे हुंफण्णमः । ओं फट् शिखायै हुंफण्णमः । ओं हुं कवचाय हुंफण्णमः । ओं हः नेत्राय हुंफण्णमः । ओं हुं फट् अस्त्राय हुंफण्णमः ।

बहिरष्टदलं पद्मं ध्यात्वास्मिन्नस्त्रमर्चयेत् ।
मण्डले चतुरश्रे वा रजोराजिविराजिते ॥ ४ ॥

प्रणवासनमारूढं दशबाहुं महाबलम् ।
पञ्चास्यं दशकर्णं च प्रतिवक्त्रं त्रिलोचनम् ॥ ५ ॥

दंष्ट्राकरालमत्युग्रं महानादं सुदुर्जयम् ।
लेलिहानं दुराधर्षं सूर्यकोट्ययुतप्रभम् ॥ ६ ॥

इत्थं पाशुपतञ्चास्त्रं विघ्नसङ्घातमर्दनम् ।
कर्णिकामध्यमासीनं पूजयेत्परमेश्वरम् ॥ ७ ॥

बिन्दुनादवियुक्तेन विदध्यान्मरणादिकम् ।
युक्तेन बिन्दुनादाभ्यां भुक्तिं मुक्तिं च साधयेत् ॥ ८ ॥

प्रणवं तैजसे पत्रे श्लीङ्कारं शाङ्करे दळे ।
नैर्ऋते तत्तृतीयं तु चतुर्थं वायुगोचरे ॥ ९ ॥

हुङ्कारं देवनेत्रेषु हुंफडिन्दुदळे स्थितम् ।
इत्थं विन्यस्य सम्पूज्य विधिना होममाचरेत् ॥ १० ॥

नवात्माहुतिभिस्तत्र नवभिस्संस्कृतेऽनले ।
त्रि[1]मधुनास्त्रराजस्य यजेदष्टाधिकं शतम् ॥ ११ ॥

बलिं दत्वा विधानेन कलशं वारिपूरितम् ।
पूजयेल्लक्षणोपेतं पूर्ववत्प्रणवासने ॥ १२ ॥

---

१. त्रिमधुनेति मधुशर्करापयोभिरित्यर्थः ।

पूजयेदस्त्रमन्त्रेण शतेनाष्टाधिकं शतम् ।
अनेन स्नापयेच्छिष्यं ध्यात्वा रूपं यथोदितम् ॥ १३ ॥

मङ्गलैर्वेदनिर्घोषैर्भेरीतूर्यादिनिस्स्वनैः ।
दद्याद्वस्त्राक्षतादीनि गुरुराशीपुरस्सरम् ॥ १४ ॥

इत्थमस्त्राभिषेकोऽपि विघ्नौघविनिवारणः ।
हिताय कथितः पुंसां श्रीमता सोमशम्भुना ॥१५-११२४॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ
नैमित्तिकविधावस्त्राभिषेकस्समाप्तः ।

## अथ व्रतोद्धारविधिः ।

अथ पञ्चसु पद्मेषु सद्योजातादिपञ्चकम् ।
पूजयेदानुपूर्व्येण शैवानां व्रतमुक्तये[1] ॥ १ ॥

व्रताङ्गसंख्यया वह्नौ यजेदपि शतं शतम् ।
ब्रह्मभिर्वा हृदाद्यङ्गैरन्तेवासिन्युपोषिते ॥ २ ॥

तस्य संयमकौपीनदण्डभस्मजटास्ततः ।
समर्पयेद्व्रताङ्गानि सद्योजातादिषु क्रमात् ॥ ३ ॥

चण्डनाथमथाभ्यर्च्य व्रताङ्गानि विसृज्य च ।
विधिनाऽनेन पानीयप्रवाहे च प्रवाहयेत् ॥ ४ ॥

---

१. मुक्तये मोचनायेत्यर्थः ।

नववस्त्रयुगं दत्वा तं ब्रूयादिति देशिकः ।
अनुरूपां कुलीनां च परिणेष्यसि कन्यकाम् ॥ ५ ॥

शैवानां व्रतसन्त्यागस्संक्षेपेणेति दर्शितः ।
अन्येषां व्रतयुक्तानां प्रसङ्गात्सोभिधीयते ॥ ६ ॥

बुद्धितत्वे स्थिता बौद्धा जैनास्तु गुणमस्तके ।
वेदान्तज्ञास्तु तद्योनौ पुरुषे भगवन्मुखाः ॥ ७ ॥

पाशुपतास्तु मायायां विद्यायां तु महाव्रताः ।
बौद्धादिलिङ्गिनामेषां मुक्तिस्थानान्यनुक्रमात् ॥ ८ ॥

त्रिरात्रं पञ्चरात्रं वा लिङ्गिनामुपवासिनाम् ।
प्रायश्चित्तविशुद्धानां स्थितानां मण्टपाद्बहिः ॥ ९ ॥

सम्पूज्य पशुभर्तारं विस्तरेण यथा पुरा ।
अमीषां देशिकः कुर्यल्लिङ्गोद्धारविधिं यथा ॥ १० ॥

बुद्ध्यादिभूमिपर्यन्ततत्त्वव्रातं विभावसौ ।
उपस्थाप्य स्वसंज्ञाभिरेकैकं वा प्रपूजयेत् ॥ ११ ॥

बहिष्ठानामथैतेषां नाडीसन्धानपूर्वकम् ।
कृत्वा ताडनविश्लेषं चाकर्ष स्वात्मनि स्थितम् ॥१२॥

स्वाहान्तेन च मूलेन तद्योगं जातवेदसि ।
इष्टदेवार्चनापुण्यफलध्वंसाय होमयेत् ॥ १३ ॥

---

१. मर्त्यानामिति पाठभेदः ।

शंभ्रस्याष्टौ सहस्राणि लिङ्गिनं लिङ्गिनं प्रति ।
पञ्च पञ्च च मूलेन प्रतितत्त्वविमुक्तये ॥ १४ ॥

बुद्ध्यादिभ्यो धरान्तेभ्यस्समुद्धृत्य नियोजयेत् ।
पूर्वजातौ तदाचारे तद्योगास्थितये पुनः ॥ १५ ॥

पूर्णान्तं मूलमन्त्रेण यजेदष्टोत्तरं शतम् ।
तद्वत्तोये व्रताङ्गानि क्षिप्त्वा कुर्यात् गृहस्थितान् ॥

अथवाष्टदळाम्भोजे शिवाशादिप्रदक्षिणम् ।
शवर्गादि अवर्गान्तान् न्यसेद्वर्गाननुक्रमात् ॥ १७ ॥

क्षौंकारमक्षरं शम्भुं ब्रह्माङ्गैस्सहितं सुरैः ।
सम्पूज्य कर्णिकामध्ये पूजयेत्तं हुताशने ॥ १८ ॥

वर्गाणां तर्पणं कृत्वा शिवाज्ञातस्सवर्गके ।
उपस्थाप्यार्चिते तेषां चैतन्यस्यैव पूर्ववत् ॥ १९ ॥

पूर्णावसानकं हुत्वा षडङ्गेन ततश्शतम् ।
वह्नेर्वियोज्य चैतन्यं तच्छरीरे निवेशयेत् ॥ २० ॥

एवं यवादिवर्गेषु कृत्वा संयोजनादिकम् ।
व्रताङ्गानि समादाय गम्भीरे पयसि क्षिपेत् ॥ २१ ॥

---

१. मन्त्रस्येति पाठभेदः । २. तत्त्वं त्वि इति पाठभेदः ।

25

ततो वस्त्रयुगं दत्वा गर्भस्थे विनियोजयेत् ।
तेषां कुर्वीत वा दीक्षां भक्तानामनुकम्पया ॥ २२ ॥
विसृज्य स्थण्डिलेशाग्निं विधिना शोधयेत्स्रुवम् ।
इति व्रतसमुद्धारो रचितस्सोमशम्भुना ॥ २३-११४७ ॥

# अन्त्येष्टिविधिः ।

साधकाचार्यपुत्राणां मृतस्यैकस्य कर्हिचित् ।
अन्त्येष्टिरुच्यते तस्य ह्यध्वशुद्धिविवर्जिता[1] ॥ १ ॥

मृतस्य पितृभूमिप्रापणक्रमः ।

कृते हरितवंशाद्यैर्वेष्टिते रक्तवाससा ।
पुष्पमालापताकाढ्ये शङ्खतूर्यरवाकुले ॥ २ ॥
विमाने स्वर्गसोपाने समारोप्य शवं नयेत् ।
दीक्षितैस्तुल्यजातीयैरपसव्योपवीतकैः ॥ ३ ॥
जपद्भिरस्त्रमन्यैर्वा धारयेच्च शवान्तिके ।
सुविशुद्धे महीपृष्ठे मृतं दक्षिणमस्तकम् ॥ ४ ॥

---

१. अध्वशुद्धिविवर्जितेति तत्त्वशुद्धीति मातृकापाठः। साधकाचार्य-पुत्राणां कलादिषडध्वशुद्धिसहिताऽन्त्येष्टिः । समयिनस्तु अध्वशुद्धिरहित अन्त्येष्टिः प्रोक्ता। निर्वाणदीक्षाभिलाषिणः अप्राप्ततद्दीक्षस्य मृतस्य सामा-न्यसमयिनः अध्वशुद्धिसाहिता विधेया ।

कुण्डादिनिर्माणविधिः।

कृत्वा कुण्डं विधानेन चतुरश्रैकमेखलम्।
षडङ्गुलोच्छ्रितं वायोस्तन्मृदा[1] स्थण्डिलं दिशि[2] ॥ ५ ॥
कुण्डदक्षिणतः कुर्याच्चिताखातं चतुष्करम्।
हस्तद्वितयविस्तीर्णमष्टाङ्गुलगभीरकम् ॥ ६ ॥
कुण्डादित्रयमप्येतल्लिम्पेद्गोमयवारिणा।

मण्टपपूजापूर्वकरणीयविधिः।

अथ स्नातः कृतन्यासो गृहीत्वास्त्रयुतो[3] गुरुः ॥ ७ ॥
अदक्षिणक्रमाद्[4]दत्वा स्थण्डिलान्त[5]मुदङ्मुखः।
विपरीतकरन्यासो हेतिमन्त्रेण[6] रक्षितः ॥ ८ ॥
कृतान्तर्यजनो मौनी मन्त्रयित्वास्त्रवर्धनीम्[7]।
द्रव्यं[8] तदम्भसा सिञ्चेदात्मानं पूजयेत्ततः ॥ ९ ॥
प्रक्षिप्य विकिरव्रातं वर्धन्यासनहेतवे।
समाहृत्य विधानेन चितावास्तुं विवर्तयेत्[9] ॥ १० ॥

---

१. तन्मृदा कुण्डस्थमृत्तिकया। २. दिशि कुण्डस्य वायोर्दिशि। ३. अस्त्रयुतः अस्त्रवर्धनीयुतः। ४. अदक्षिणक्रमात् अप्रदक्षिणक्रमात् इत्यर्थः। ५. स्थण्डिलान्तं स्थण्डिलान्तिकमित्यर्थः। ६. हेतिमन्त्रेण कवचमन्त्रेण अत्र अवकुण्ठनादिकं अन्तर्यजनादिकं सर्वमपि प्रातिलोम्येन विधेयम्। ७. मन्त्रयित्वास्त्रवर्धनीमिति अस्त्रमन्त्रेण वर्धनीस्थतोयमभिमन्त्र्येति भावः। ८. द्रव्यं जात्येकवचनम्। ९. विवर्तयेदिति पूजयेदिति भावः।

मण्डपपूजाविधिः ।

पञ्चभागीकृते क्षेत्रे पञ्चविंशतिकोष्ठके ।
पृथिव्यादियथावर्णं पञ्चवर्णैर्विभूषिते ॥ ११ ॥

वंशरज्वादिसम्पन्ने विन्यसेद्वास्तुदेवताम् ।
तत्र मध्ये भुवा सार्धं ब्रह्माणं पञ्चकोष्ठके ॥ १२ ॥

नैर्ऋत्यां वारिणा सार्धं विष्णुं कोष्ठचतुष्टये ।
अग्निकोणे चतुष्कोष्ठे रुद्रं ज्वलनसंयुतम् ॥ १३ ॥

वायुकोणे चतुष्कोष्ठे वायुना सममीश्वरम् ।
तच्चतुष्के तथैशान्यां गगनेन सदाशिवम् ॥ १४ ॥

पूर्वादिदिक्षु कोष्ठेषु शक्रादींश्चतुरोऽर्चयेत् ।
निजनाम्ना नमोन्तेन स्वाहान्तेन बलिं दिशेत् ॥१५॥

"ओं हां वास्त्वधिपतये ब्रह्मणे नमः" इति भूमौ । ओं हां विष्णवे नम इति जले । ओं हां रुद्राय नम इति ज्वलने । ओं हां ईश्वराय नम इति वायौ । ओं हां सदाशिवाय नम इत्याकाशे । इत्यादयो मन्त्राः ।

ऐशान्यां दिशि वर्धन्यामिष्ट्वा पाशुपता[1](न्वितैः) णुभिः ।
अष्टासु विन्यसेद्दिक्षु लोकपाला[2]युधानि तु ॥ १६ ॥

---

१. पाशुपतेति ओं अस्त्रासनाय हुंफण्णमः इत्यादिक्रमेणेति भावः ।
२. लोकपालायुधानि तु इति शूलगदाध्वजादीनीति भावः ।

ऐशान्याद्यासनं दत्वा स्थण्डिलाम्भोजमध्यगम् ।
मनोन्मन्यादिवामान्तं शक्तिचक्रं प्रपूजयेत् ॥ १७ ॥
विकीर्य तिलभस्मादि साङ्गं सम्पूज्य शङ्करम् ।

अग्निकार्यक्रमः ।

प्रक्षिप्य दक्षिणे कुण्डे जनयेत्प्रा[1]गिवानलम् ॥ १८ ॥
हृद्यग्नौ पूजयित्वेशं हुत्वा पूर्णावसानकम् ।

चितास्थले करणीयानि ।

अप्रदक्षिणमग्न्यादिकोणेषु निखनेत्क्रमात् ॥ १९ ॥
प्रजप्तानस्त्रमन्त्रेण रक्तसूत्रेण वेष्टि(तम्)तान् ।
ऊर्ध्वमूलानधोग्रांश्च शुष्ककाष्ठीयकीलकान् ॥ २० ॥
इन्धनैश्छिद्रमापूर्य सकुशैः कुसुमैस्तिलैः ।
पूजयेदस्त्रमन्त्रेण वि[2]परीतपटावृतम् ॥ २१ ॥

मृतं विषयीकृत्य करणीयविधिः ।

मृतं मृद्गोमयाम्भोभिस्संस्नाप्योद्धूळ्य चानयेत् ।
दद्याद्यज्ञोपवीतं च पूर्ववर्णानपेक्षया ॥ २२ ॥
अथात्र धा[3]रणाशुद्धे गन्ध[4]पुष्पादिपूजिते ।
महाजालप्रयोगेण जीवमादा[5]य विन्यसेत् ॥ २३ ॥

---

१. प्रागिवानलं इति कुण्डे अग्नेः जननादिकं पूर्ववत् कार्यमिति भावः । २. विपरीतपटावृतं इति कवचमन्त्रमुच्चार्य दक्षिणदशेन वस्त्रेणापसव्यं आच्छाद्येत्यर्थः । ३. धारणाशुद्धे पार्थिवादिपञ्चधारणाभिरित्यर्थः । ४. गन्धपुष्पादीति हृदये आसनमभ्यर्च्येति भावः । ५. आदाय विन्यसेत् प्रेतहृदयकमले इति शेषः ।

[१]ओं हूं हां हं हां हूं अमुकात्मने नमः ।
विद्यादेहं च तद्देहे मस्तके वदने हृदि ।
नाभावधश्शरीरे च शान्त्यतीतादितः कलाः ॥ २४ ॥
विद्यातत्त्वं च विन्यस्य शक्तिचक्रं तथा शिवम् ।
चैतन्यसन्निधानाय मूलेन जुहुयाच्छतम् ॥ २५ ॥
निवृत्त्यादि समादाय युगपद्वा क्रमेण वा ।
अग्नौ संयोज्य सम्पूज्य शिवाद्यावाहनादिकम् ॥ २६ ॥
कृत्वा ताडनविश्लेषौ जीवस्याकर्षणादिकम् ।
कर्मात्मस्थं च तत्रस्थं दीक्षावत्सर्वमाचरेत् ॥ २७ ॥
[२]जन्माधिकारभोगश्च लयं स्रोतोविशोधनम् ।
निष्कृतिश्च तिरोधानं पशोः पाशविमोचनम् ॥ २८ ॥
मर्दनं वर्तुलीकारं पाशदाहादिकां क्रियाम् ।
कारणाऽऽवाहनं तद्वदधिकारसमर्पणम् ॥ २९ ॥
आत्मोद्धारणकर्मादि कृत्वा गुणविवर्जिते ।
योजयेद्भावनातीते शिवे चैतन्यमव्यये ॥ ३० ॥
स्थण्डिलेशं नियोज्याग्नौ शवं दक्षिणमस्तकम् ।

शवदहनविधिः ।

चितामुत्तानमारोप्य विदधीत सदिन्धनैः ॥ ३१ ॥

---

१. ओं हूं हां इति महाजालमन्त्रेणेति भावः । २. जन्मेति कर्मेतिपाठे विशिष्टजात्यायुर्भोगादिसमयाचारसहितकर्म इत्यर्थः ।

चितिं सन्दीपयेत् पश्चात् कुण्डमध्यशिवाग्निना ।
ज्वलितेऽग्नौ शिरोदेशे पूर्णां सौम्याननो यजेत् ॥३२॥

ओं त्वमग्ने[1] दक्षिणः काल[2]ः कालेनैवोपपादिताम् ।
गृहाण मन्त्रसम्पूतां शाव्यामेनां महाहुतिम् ॥ ३३ ॥

पठन्नेवं महामन्त्रं दत्वा पूर्णां भवान्तिमाम् ।
स्थापयेत्तत्र दीप्तायां स्रुक्स्रुवौ तावधोमुखौ ॥ ३४ ॥

शवदहनानन्तरकरणीयविधिः ।

वामांसेस्राळुमाधाय प्रत्यग्धारामदक्षिणाम् ।
विमुञ्चन्निक्षिपेत्तत्र यत एव समुद्धृतः ॥ ३५ ॥

ततो जलान्तिकं गत्वा पश्चादनवलोकयन् ।
स्नात्वा प्रस्तीर्य सद्दर्भानपसव्यं विधाय च ॥ ३६ ॥

ओं हां शुद्धा[3]त्मन् ईशो भव स्वधा । ओं हां शुद्धात्मन् सदाशिवो भव स्वधा । ओं हां शुद्धात्मन् शान्तो भव स्वधा । इति निवापाञ्जलित्रयं दद्यात् ।

देशिको बहुरूपस्य पुनस्स्नात्वा शतं जपेत् ।
द्विगुणं स्कन्धदातारस्ततो यायान्निजाश्रमम् ॥ ३७ ॥

---

१. अग्ने इति अग्निशब्देन रुद्रः कथ्यते । २. काल इति कालशब्देन अघोरो गृह्यते । ३. समयविशेषदीक्षावतां तु ओं हां शुद्धात्मन् स्कन्दो भव स्वधा । ओं हां शुद्धात्मन् चण्डो भवस्वधा । ओं हां शुद्धात्मन् गणाधीशो भव स्वधा इति क्रमेण ज्ञेयम् ।

तत्र देवार्चनं कुर्यात्तमुद्दिश्य तपस्विनम् ।
प्रथमेऽह्नि तृतीये वा कुर्यात्सञ्चयनं चितेः ॥ ३८ ॥

कृत्वाऽथ कर्करीं पूर्णां क्षीरेण पयसाऽथवा ।
तत्र त्रिकाष्ठके दत्वा तस्यां तां स्थापयेदिति ॥ ३९ ॥

प्रबोधाय विबुद्धीनां श्रीमता सोमशम्भुना ।
क्रियाकाण्डक्रमावळ्यां कृतोऽन्त्येष्टिविधिक्रमः
॥ ४०–११८७ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ
अन्त्येष्टिविधिक्रमस्समाप्तः ।

---

# श्राद्धविधिः ।

---

ततो विधीयते श्राद्धं विसूतकदिनादितः ।
प्रति मासं समं यावत् देशिकादीष्टदं भवेत् ॥ १ ॥

तिथिषु श्राद्धपक्षे च श्राद्धं सर्वं सुसाधयेत् ।
षड्दैवतं गृहस्थानां लिङ्गिनां तु त्रिदैवतम् ॥ २ ॥

लिङ्गिनो ब्राह्मणाद्याश्च श्राद्धीयाश्शिवदीक्षिताः ।
ईशस्सदाशिवश्शान्ताश्शिवश्राद्धे तपस्विनाम् ॥ ३ ॥

रुद्रश्चानन्तनाम्ना च विश्वेदेवौ स्थितौ द्विजौ।
दीक्षितानामीशदेवा रुद्रांशानामथोच्यते ॥ ४ ॥
तत्र नन्दिमहाकाळौ विश्वेदेवौ गणौ स्थितौ।
स्कन्दचण्डगणाधीशा गणास्त्रिषु यथाक्रमम् ॥ ५ ॥
[1]लौकिके ब्रह्मविष्ण्वीशा विश्वेदेवौ यमारुणौ।
पञ्चाभावे तु सर्वत्र युज्यते पुरुषद्वयम् ॥ ६ ॥
शि[2]रसा कटिभागेन त्रयमेकत्र कल्पयेत्।
बाहुमूलविभेदेन विश्वेदेवौ द्वितीयके ॥ ७ ॥
एकत्र बाहुयुग्मेन सह वा पञ्च कल्पयेत्।
च[3]तुर्थी सप्तमी चैव नवमी च त्रयोदशी ॥ ८ ॥
अमावास्या मघा चासु पितृपक्षं प्रकल्पयेत्।
अष्टम्यां पर्वशेषे च मातृवर्गमिति स्मृतम् ॥ ९ ॥
निमन्त्रयीत पूर्वेद्युर्यथा गौरवमादृतः।
आनयेत्तानथाऽन्येद्युरपराह्णे कृ[4]तक्रियम् ॥ १० ॥

---

१. **लौकिके** इति श्राद्धे इति शेषः। "श्राद्धं तल्लौकिकं रौद्रं शैवं चेति त्रिधा मतम्। त्रयस्स्युर्लौकिके देवा ब्रह्मविष्णुमहेश्वरा" इति सिद्धान्तशेखरे स्पष्टम्। २. **शिरसा कटिभागेनेति** शिरस्स्कन्धविभागेनेति पाठे शिरस्स्कन्धविभागस्थाने इति भावः। ३. **चतुर्थीति** "चतुर्थी सप्तमी चैव नवमी च त्रयोदशी। अमावास्या मघा चासु पितृपक्षं प्रकल्पयेत्" इति उत्तरकामिके स्पष्टम्। ४. **कृतक्रियं** गोमयाम्भोभिः सुप्रलिप्तम्।

वेदाश्रमङ्गणे[1] प्राच्यां कुर्यान्मण्डलकद्वयम् ।
दक्षिणोत्तरसंस्थानं करमात्रं करान्तकम्[2] ॥ ११ ॥

प्रतीच्यां वर्तुळं तद्वत्पैत्रं दैवं तु पूर्वकम् ।
देवद्वये[3] यवान् दद्यात् सकुशान् पैत्रयोस्तिलान् ॥१२॥

विद्याङ्गास्त्रेण याम्ये द्वे उत्तरे चाधिपेन तु ।
पूजयेत्कुसुमैश्श्वेतैश्चतुरश्रे क्रमात्ततः ॥ १३ ॥

यवैर्द्वयोस्त्रयाणां तु दद्यादर्घ्यं तिलैस्सह ।
स्वाहास्वधान्तकैर्मन्त्रैस्स्वनामप्रणवान्वितैः ॥ १४ ॥

दक्षिणे वामदेवेन पादौ प्रक्षाळयेन्मृदा ।
दद्यादाचमनं सौम्ये स्वाचान्तेन प्रवेशयेत् ॥ १५ ॥

आसनेषु सुधौतेषु पादैनैवोपवेशयेत् ।
द्वयं पूर्वाननं पूर्वं ततस्त्रयमुदङ्मुखम् ॥ १६ ॥

द्रव्यमर्घ्याम्बुना प्रोक्ष्य प्रार्थयेत्तान् समाहितः ।
यथाश्राद्धं करिष्येऽहं कुरुष्वेति सतैर्नुतः ॥ १७ ॥

द्वाभ्यां दद्यादजातेन सव्येनासनयोः कुशान् ।
त्रयाणामपसव्येन सर्वत्रैवं यथाविधि ॥ १८ ॥

---

१. अङ्गणे गृहाजिरे । २. करान्तकमिति करान्तरमिति स्थातव्यमिति भाति। ३. देवद्वये इति तथा चोक्तं उत्तरकामिके ''गन्धपुष्पकुशाम्भोभिः विद्याङ्गैर्ब्रह्मसंयुतैः । देवार्थं यवसंयुक्तैः पित्रर्थं तिलसंयुतैः'' ।

आवाहयेद्यथानाम पञ्चापि तदनन्तरम् ।
रक्षा यवैस्तिलैः कार्या वामेशाभ्यामनुक्रमात् ॥ १९ ॥

सान्निध्यार्घ्यमघोरेण सपुष्पाम्बुकुशाक्षतम् ।
द्वाभ्यां त्रिभ्यस्तु ईशेन दद्याद्भूमिष्ठजानुकः ॥ २० ॥

यवैः पादादिमूर्धान्तं द्वयं सम्पूज्य रूपिणा ।
दत्वेशेन पवित्राद्यं ब्रूयात्सम्पूर्णमस्त्विति ॥ २१ ॥

ततस्तान् श्रावयेत्तेषां पात्रे[1] कृत्वा विधानतः ।
पितृस्थानमसीत्युक्त्वा न्युब्जं पात्रमधो न्यसेत् ॥ २२ ॥

सर्वपाकाग्र्यमादाय हुत्वाग्नौ[2] पितृयज्ञवत् ।
हुतशेषं ददीतान्नं पात्रेषु पुरुषं पठन् ॥ २३ ॥

इत्यग्नौ करणं कृत्वा मधुरान्नं घृतप्लुतम् ।
दद्यात्पुंसा पवित्रार्थं स्पृष्ट्वाऽघोरेण मन्त्रवित् ॥ २४ ॥

---

१. पात्रे कृत्वा विधानत इति सम्पूर्णमस्त्विति कर्ता प्रोक्त्वा तैरप्यस्तु सम्पूर्णमिति उक्तः तेषां हस्ते अर्घ्यजलं दत्वा तस्मात्संस्रुतमम्बु-सपवित्रं पात्रे सङ्गृह्य पितृस्थानमसीति नैऋतेऽधोमुखं निक्षिपेदिति भावः ।

२. हुत्वाग्नाविति होमप्रकारस्त्वित्थं "ओं ईशाय पित्रे स्वधा नमस्स्वाहा । ओं सदाशिवाय पितामहाय स्वधा नमस्स्वाहा । ओं शान्ताय प्रपितामहाय स्वधा नमस्स्वाहा । ओं ईशायै मात्रे स्वधा नमस्स्वाहा । ओं सदाशिवायै पितामह्यै स्वधा नमस्स्वाहा । ओं शान्तायै प्रपितामह्यै स्वधा नमस्स्वाहा । ओं शिवीभूतायामुकशिवाय स्वधा नमस्स्वाहा" । समयिनस्तु पितृमातृ पक्षयोः स्कन्दाद्याः ऊह्याः ।

अपसव्यं तदङ्गुष्ठममृतायासमन्ततः ।
वामं मृत्युञ्जितं वापि परितो भ्रामयेत्पठन् ॥ २५ ॥

आपोशनं समीशेन प्रदद्यात् पाणिपङ्कजे ।
वाचंयमाः प्रभुञ्जीरन् ते जुषध्वमितीरिताः ॥ २६ ॥

कर्ता तिष्ठेज्जपन्नीशमातृप्तेरुदगाननः ।
अतिथिं भोजयेद्भक्त्या तत्काले न विचारयेत् ॥२७॥

अन्नमादाय तृप्तास्स्थ भणित्वानुमतश्शनैः ।
तदन्नं विकिरेद्भूमौ दद्याच्चापस्सकृत्सकृत् ॥ २८ ॥

उच्छिष्टनिकटे कुर्याद्गोमयेनाथ मण्डलम् ।
तत्र दर्भानजातेन वामेन प्रकिरेत्तिलान् ॥ २९ ॥

त्रयं सर्वान्नपिण्डानां सतिलं दक्षिणामुखः ।
दद्यादुपरि दर्भाणां क्रमादीशादिशम्बरैः ॥ ३० ॥

विधाय वारिणा धारां वामदेवमुदीरयन् ।
सुगन्धपुष्पधूपाद्यैः पूजयित्वा प्रणम्य च ॥ ३१ ॥

क्षमयित्वोपसंहृत्य समाचम्य विधानवित् ।
पूर्वमाचमनं त्रिभ्यो द्वाभ्यां दद्यादनन्तरम् ॥ ३२ ॥

दद्याच्च दक्षिणामेभ्यः कुर्यात्पात्रमुदाननम् ।
विसृजेत्प्रणतस्सर्वान् प्रदक्षिणमनुव्रजन् ॥ ३३ ॥

दद्यान्मध्यं स्त्रियै पिण्डं रुद्रांशं सुतहेतवे ।
गवे विप्राय वा तोये वह्नौ वा त्रीन् विनिक्षिपेत् ॥ ३४ ॥

शिवश्राद्धे कृते देवा मनुष्याः पितरोऽसुराः ।
तृप्ताश्शिवानुभावेन वर्धयन्ति कुलद्वयम् ॥ ३५ ॥

यत्कीर्तिर्द्योतयामास चक्रवाळाद्रिकन्दरात् ।
कृतश्श्राद्धविधिर्लेशाच्छ्रीमता सोमशम्भुना ॥
॥ ३६-१२२३ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ नैमित्तिकविधौ

श्राद्धविधिस्समाप्तः ।

नैमित्तिकविधिस्सम्पूर्णः ।

---

॥ श्रीः ॥

# क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ

## काम्यविधौ

# शिलान्यासविधिः ।

## (प्रतिष्ठाभेदः)

---

कथ्यतेऽथ प्रतिष्ठापि संक्षेपेण क्रमेण च ।
पीठं शक्तिश्शिवो लिङ्गं तद्योगश्च शिवाणुभिः ॥ १ ॥
प्रतिष्ठा[1] भिन्नपीठस्य स्थितस्थापनमुच्यते ।
उत्थापनं तु सा प्रोक्ता लिङ्गोद्धारपुरस्सरी ॥ २ ॥
यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ।
आस्थापनं तदुद्दिष्टं पञ्चधा ये शिवाश्रिताः ॥ ३ ॥
द्विधा नारायणादीनामास्थाप्योत्थाप्यभेदतः ।
आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥ ४ ॥
[2]पादद्वारादिभेदेन प्रासादेष्वपि पञ्चधा ।

---

१. प्रतिष्ठेति प्रतिष्ठाया पञ्चविधभेदस्य निरूपणं सिद्धान्तशेखरादावतिस्पष्टम् । २. पादद्वारादीति तदुक्तं सिद्धान्तशेखरे "प्रतिष्ठा पञ्चधा प्रोक्ता प्रासादेष्वपि सा यथा । पादानां प्रथमा प्रोक्ता द्वारस्य तदनन्तरम् । हृत्कण्ठस्य तृतीया च चतुर्थी स्तूपिकाश्रिता । ध्वजस्य पञ्चमी प्रोक्ता" इति ।

## भूपरीक्षाविधिः ।

परीक्षा[1]मथ मेदिन्याः कुर्यात्प्रासादकाम्यया ॥ ५ ॥
शुक्ला[2] सुगर्ता रक्ता च सरसा चातिगन्धिनी ।
पीता कृष्णा सुरागान्या विप्रादीनां मही क्रमात् ॥६॥
पूर्वेशोत्तरस[3]र्वत्र प्लवा चैव प्रशस्यते ।
अभावेऽभीष्टवर्णस्य वर्णापादनमाचरेत् ॥ ७ ॥
आखाते हास्तिके यस्याश्चूर्णे मृदधिका भवेत् ।
उत्तमां तां महीं विद्यात्तो[4]याद्यैर्वा परीक्षिताम् ॥ ८ ॥

## भूपरिग्रहादिविधिः ।

अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद्भुवम् ।
खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥ ९ ॥

---

१. परीक्षामथेति। तदुक्तं शैवकालविवेके "परीक्ष्य भूमिं प्रथमं तु देशिको रसेन गन्धेन च वर्णतोऽपि च। मृदा जलाद्येन निमित्ततोऽप्यथाऽशुभे तु कुर्यादपि शान्तिमादरात्" इति। २. शुक्लेति। तथाच सुप्रभेदे "श्वेता रक्ता तथा पीता कृष्णा भूर्ब्राह्मणादयः। मोक्षदा ब्राह्मणा भूमिः जयदा क्षत्रिया तथा" इत्युक्तम् । ३. पूर्वेशोत्तरसर्वत्रेति। इदमनन्वितं भाति। "पूर्वोत्तरप्लवा श्रेष्ठा मध्यमा सर्वतः प्लवा" इति। कामिकवचनम् । ४. तोयाद्यैरिति। जलेन परीक्षणं यथा कामिके "सपुष्पकुम्भतोयेन पूर्यमाणेऽवटे सति। शस्तं प्रदक्षिणावर्तमुदकं शान्तबुद्बुदम् । उत्तानपुष्पकं श्रेष्ठं नत्वधोमुखपुष्पकम्" । इति । आद्यपदेन बीजैरपि परीक्षणं यथा कामिके "सर्षपाणां तिलानां वा चोप्तानामङ्कुरा भुवि । त्रिरात्रेण प्रजायन्ते यस्यां सा शुभदा मही" इति । अजिते परीक्षान्तरमप्युक्तं "दक्षिणेन तु पादेन कुट्टयेदस्त्रमुच्चरन् । कुट्टने यदि सा भूमिर्गम्भीरा नदति स्थिरा । संग्राह्या चे"ति ।

मण्टपे द्वारपूजादिमन्त्रतृप्त्यवसानकम् ।
कर्म निर्वृत्य घोरास्त्रं सहस्रं विधिना यजेत् ॥ १० ॥

समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशम्[1] ।
स्वर्णदध्यक्षतैरेखां प्रकुर्वीत प्रदक्षिणम् ॥ ११ ॥

मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत् ।
वास्तुमभ्यर्च्य तत्तोयैस्सिञ्चेत्कुन्दालकादिकम् ॥ १२ ॥

बाह्ये अष्टौ ग्रहानिष्ट्वा विधिना दिग्बलिं क्षिपेत् ।
पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके ॥ १३ ॥

कुन्दालेनाभिषिक्तेन मधुनाक्तेन खानयेत् ।
नैरृत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् ॥ १४ ॥

भूमिं संसिच्य संस्नाप्य कुन्दालाद्यं प्रपूजयेत् ।
अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे द्विजन्मनः ॥ १५ ॥

निधाय गीतवादित्रब्रह्मघोषसमाकुलम् ।
पुरस्य पूर्वसीमान्तं नयेद्यावदभीप्सितम् ॥ १६ ॥

अथ तत्र क्षणं स्थित्वा भ्रामयेच्च(रि)लितः पुरम् ।
सिञ्चन् सीमान्तचिह्नानि यावदीशान्तगोचरम् ॥ १७ ॥

---

१. संशोधयेद्दिशमिति । यथा अजिते "तं देशं समनुप्राप्य प्रणम्य च महेश्वरम् । दिव्यान्तरिक्षभौमानि निमित्तान्युपलक्षयेत् । तच्छुभाशुभमालक्ष्य शुभे भूमिं परीक्षयेत् । अशुभेषु निमित्तेषु ह्यघोरेण शताहुतिम्" इत्यादि ।

अर्घ्यदानमिदं प्रोक्तं भद्रकुम्भपरिभ्रमात् ।
इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥ १८ ॥

शल्योद्धारविधिः ।

शर्करान्तं जलान्तं वा शल्यदोषजिघांसया ।
खानयेदथवा ज्ञात्वा विधिना शल्यमुद्धरेत् ॥ १९ ॥

क[1]वचतमोहासपया नव प्रश्नाक्षराणि च ।
ल[2]ग्ने ध्व[3]जादिः पतितस्स्वस्थाने शल्यमा(ख्य)ति ॥२०॥

क[4]र्तुश्चाङ्गविकारेण जानीयात्तत्प्रमाणतः ।
पश्वादीनां प्रवेशेन कीर्तनैर्विरुतैर्दिशः ॥ २१ ॥

दिङ्मात्रमिदमाख्यातं विस्तारोऽन्यत्र लक्ष्यताम् ।
अञ्जसा स्तोकखातेषु शल्योद्धारः प्रयोजनम् ॥ २२ ॥

प्रोक्ष्यारम्भिः करापूरैरष्टाङ्गुलमृदन्तरैः ।
पादोनखातमापूर्य सजलैर्मुद्गराहतैः ॥ २३ ॥

लिप्तां समप्लवां तत्र कारयित्वा भुवं गुरुः ।

---

१. कवचेति मातृकायां "कवचत एवास्सपाय नवचेत्प्रश्नाक्षराणि जायते" इति विद्यते । २. लग्ने इति प्रश्नमुहूर्ते । ३. ध्वजादिरिति ध्वजधूमादयः दग्धदीपितधूमितभेदेन पतिताश्चेत् स्वस्थाने वास्तोरङ्गे शल्यमाख्यातीत्यर्थः । ४. कर्तुरिति यदाह सिद्धान्तशेखरकारः "शिरसस्पर्शने वास्तोर्मस्तके शल्यमुद्धरेत्" इत्यादिना ।

शिलास्नानमण्टपगमनात्पूर्वं करणीयाविधिः ।

सामान्यार्घ्यकरो[1] यायात् मण्टपं वक्ष्यमाणकम् ॥ २४ ॥
तोरणद्वाः पतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ।
कुर्यात्तत्राऽऽत्मशुद्ध्यादि कुण्डमण्टपसंस्कृतिम् ॥ २५ ॥
कलशं वर्धनीयुक्तं लोकपालशिवार्चनम् ।
अग्नेर्जननपूजादि सर्वं पूर्ववदाचरेत् ॥ २६ ॥
यजमानार्चितो यायात् शिलानां स्नानमण्टपम् ।

प्रासादशिलालक्षणविधिः ।

शिलाः प्रासादलिङ्गस्य पादा धर्मादिसंज्ञकाः ॥ २७ ॥
अष्टाङ्गुलोच्छ्रितास्शस्ताश्चतुरश्राः करायताः ।
पाषाणानां शिलाः कार्या इष्टकानां तदर्धतः ॥ २८ ॥
प्रासादे स्युश्शिलाश्शैले इष्टका इष्टकामये ।
अङ्किता नैव[2] वज्राद्यैः पञ्च वा पङ्कजाङ्किताः ॥ २९ ॥

---

१. सामान्येति "उत्तरायणकालेतु शुभमासे शुभे दिने । शुभे लग्ने च कुर्वीत पादानां स्थापनं गुरुः" इत्यादिनाऽऽरभ्य किञ्चिद्विशेषेणोक्तं सिद्धान्तशेखरे । २. नवेति नवशिलानां नामभेदोऽत्र न कथितः । तथैव नवकुम्भानामपि । विशिथिलतया स्थातव्यमिति भाति । नवशिलाकुम्भानां नामभेदस्सिद्धान्तशेखरे प्रोक्तः "नन्दा भद्रा जया पूर्णाऽजिता वाचाऽपराजिता । विजया मङ्गळा ख्याता धारणी नव ताश्शिलाः ॥ सुभद्रश्च विभद्रश्च सुनन्दः पुष्पदन्तकः । जयोऽथ विजयः पूर्णः कुम्भः पूर्णस्तथोत्तरः ॥ निधिकुम्भमिव स्थाप्याः" इति ।

नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमी शिला।
आसां पद्मो महापद्मः शङ्खो मरकतस्तथा ॥ ३० ॥

समुद्रश्चेति पञ्चामी निधिकुम्भाश्च वै नव।

## शिलास्नानविधिः।

आसनं प्रणवं दत्वा तयोर्लिख शिखाणुना ॥ ३१ ॥

सर्वासामविशेषेण तनुत्रेणाऽवकुण्ठनम्।
मृद्भिर्गोमयगोमूत्रक्षारैर्गन्धैश्च वारिणा ॥ ३२ ॥

अस्त्रेण हुम्फडन्तेन मलस्नानं समाचरेत्।
विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ॥ ३३ ॥

गन्धतोयान्त(रं)रे कुर्यान्निजनामाङ्कितारणुना।
फलरत्नोदकैश्चापि गोशृङ्गसलिलैस्ततः ॥ ३४ ॥

## शिलार्चनाविधिः।

चन्दनेन समालभ्य वस्त्रैराच्छादयेच्छिलाः।
षडुत्थमासनं[1] दत्वा नीत्वा यागं प्रदक्षिणम् ॥ ३५ ॥

शाल्यां[2] च तूलतल्पे वा हृदयेन निवेशयेत्।
सम्पूज्य न्यस्य बुद्ध्यादिधरान्तं तत्त्वसञ्चयम् ॥ ३६ ॥

---

१. षडुत्थेति अनन्ताय नमः, धर्माय नमः, ज्ञानाय नमः, वैराग्याय नमः, ऐश्वर्याय नमः, पद्माय नमः इति पूजयेदिति भावः। २. शय्यायां कुशतल्पे वा इति पाठः।

त्रिखण्डं व्यापकं तत्त्वत्रयं चासु क्रमान्न्यसेत् ।
बुद्ध्यादौ चित्तपर्यन्ते चित्तात्तन्मात्रकावधौ ॥ ३७ ॥

तन्मात्रादौ धरान्ते च शिवविद्यात्मसंस्थितिः ।
तत्त्वानि[1] निजमन्त्रेण तत्त्वेशांश्च हृदार्चयेत् ॥ ३८ ॥

बुद्ध्यादिधरान्ततत्त्वेशनामानि ।

बुद्धोऽहङ्कृतिसङ्कल्पौ घनानन्दः क्रमात्तथा[2] ।
तूर्णो[3] रन्ता समाधानो दुन्दुभिश्च विलुम्पकः ॥ ३९ ॥

महावक्रः प्रकाशश्च[4] सर्वाङ्गो[5] व्योमधारकः ।
सूक्ष्मश्च नादनामा च भानुमान् बलवत्तरः[6] ॥ ४० ॥

जयश्रृङ्गो[7] गन्धश्रृङ्गो मातरिश्वा त्विषां निधिः ।
जलेशश्चैव श्रीकण्ठ इति तत्त्वाधिपाः क्रमात्[8] ॥ ४१ ॥

शिवविद्यात्मतत्त्वमन्त्रक्रमः ।

ओं हूं शिवतत्त्वाय नमः, ओं हूं शिवतत्त्वाधिपतये

---

१. तत्त्वानीति । ओं हां बुद्धितत्त्वाय नमः, ओं हां बुद्धितत्त्वाधिपतये बुद्धाय नम इत्यारभ्य ओं हां पृथिवीतत्त्वाय नमः, ओं हां पृथिवीतत्त्वाधिपतये श्रीकण्ठाय नमः इत्यन्तं पूजयेदिति भावः । विस्तरभयान्नेह लिख्यते । २. क्रमात्तथेति घनाऽऽनन्दक्रमस्तथेति मूलादर्शपाठः । क्रमादय इति व्याख्यानपाठः । ३. तीर्णभुक् चेति व्याख्यानपाठः । ४. प्रशान्त इति व्याख्यानपाठः । ५. सर्वज्ञ इति व्याख्यानपाठः । ६. बलवक्रश्च भानुमान् इति व्याख्यानपाठः । ७. जयदोगन्धसंज्ञश्चेति व्याख्यानपाठः । ८. स्मृताः इति व्याख्यानपाठः ।

रुद्राय नमः। ओं हीं विद्यातत्त्वाय नमः, ओं हीं विद्यातत्त्वाधिपतये विष्णवे नमः। ओं हां आत्मतत्त्वाय नमः, ओं हां आत्मतत्त्वाधिपतये ब्रह्मणे नमः।

शिलासु क्ष्माद्यष्टमूर्तितदधीश्वरन्यासक्रमः।

क्ष्मावह्नियजमानार्कजलवातेन्दुखानि च।
प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रति शिलां शिलाम् ॥४२॥
शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम्।
महादेवं च भीमं च मूर्तीशांश्च यथाक्रमम् ॥४३॥

ओं धरामूर्तये नमः ओं धरामूर्त्यधिपतये शर्वाय नमः इत्यादिमन्त्राः।

लोकपालान[1]नन्तादीन् यथासंख्यं निजाणुभिः।
विन्यस्य पूजयेत्कुम्भान् तन्मन्त्रैर्वा निजाणुभिः ॥४४॥
मन्त्रादिबीजानि [2]लूं रूं शूं षूं पूं यूं सूं हूं।

पञ्चशिलापक्षे न्यासक्रमः।

उक्तो नवशिलापक्षश्शिलापञ्चक्रमो यथा।
प्रतितत्त्वं न्यसेन्मूर्तीः सृष्ट्या पञ्च धरादिकाः ॥४५॥
ब्रह्मा विष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः।
एते च पञ्च मूर्तीशा न्यस्तव्यास्तासु पूर्ववत् ॥४६॥

---

१. ननन्तान् तान् इति मातृकापाठः। २. लूमिति ओं हां लूं धरामूर्तये नमः इत्यादिक्रमेणेति भावः।

ओं हां पृथ्वीमूर्तये नमः, ओं हां पृथ्वीमूर्त्यधिपतये ब्रह्मणे नमः इत्यादिमन्त्राः।

सम्पूज्य कलशान् पञ्च क्रमेण निजनामभिः।
निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥४७॥

कुर्यात्प्राकारमस्त्रेण दर्भपुष्पतिलैस्ततः।

शिलार्चनाङ्गस्पर्शहोमादिविधिः।

कुण्डेषु धारिकां[1] शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥४८॥

तत्त्वतत्त्वाधिपान् मूर्तिमूर्तीशांश्च घृतादिभिः।
ततो ब्रह्मांश[2]शुद्ध्यर्थं मूलाङ्गब्रह्मभिः क्रमात् ॥ ४९ ॥

हुत्वा शतं तु पूर्णान्तं प्रोक्ष्य शान्ति[3]जलैश्शिलाः।
पूजयेच्च शिलास्स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ॥ ५० ॥

सान्निध्य[4]मथ सन्धानं कृत्वाऽशुद्धं[5] पुनर्न्यसेत्।
एवं भागत्रयेऽप्येकं दत्त्वा[6] दत्वा समाचरेत् ॥ ५१ ॥

संस्पृशेद्दर्भमूलाद्यैर्ब्रह्मांशादित्रयं क्रमात्।
कुर्यात्तत्त्वानुसन्धानं (तत्त्व)ह्रस्वदीर्घप्रयोगतः ॥५२॥

---

१. धारिकामिति ओं हां आधारशक्तये नमः इति मन्त्रेण आधारशक्तिमिति भावः। २. ब्रह्मांशेति ब्रह्मभागशुद्ध्यर्थमिति भावः। ३. शान्तिजलैरिति शान्तिकुम्भजलैरित्यर्थः। ४. सान्निध्यमिति मन्त्राणां सन्निधिं कृत्वेति भावः। ५. अशुद्धमिति यदाहुः "सन्धानं नाम विलयश्शुद्धस्याऽशुद्धवर्त्मनि" इति। ६. दत्वेति प्रत्येकं आहुतीर्दत्वा पूजां कुर्यादिति भावः।

ओं हां हीं आत्मतत्त्वविद्यातत्त्वाभ्यां नमः[1] ।
घृतेन मधुना पूर्णास्ताम्रकुम्भान् सरत्नकान् ।
पञ्चगव्यार्घ्यसंसिक्तान् लोकपालाधिदैवतान् ॥ ५३ ॥
पूजयित्वा निजैर्मन्त्रैस्सन्निधौ होममाचरेत् ।
शिलानामथ सर्वासां संस्मरेदधिदेवताः ॥ ५४ ॥
विद्यारूपाः कृतस्नानाः हेमवर्णास्स्मिताननाः ।
सर्वाभरणसम्पन्नाश्शिलानामधिदेवताः ॥ ५५ ॥
न्यूनादिदोषमोक्षार्थं वास्तुभूमेर्विशुद्धये ।
यजेदस्त्रेण पूर्णान्तमाहुतीनां शतं शतम् ॥ ५६ ॥

वास्तुपूजा ।

ततः प्रासादमासूत्र्य वर्तयेद्वास्तुमण्डलम्[2] ।
कुर्यात्कोष्ठचतुष्षष्टिं क्षे(त्रं)त्रे वेदाश्रके समे ॥ ५७ ॥
कोणेषु विन्यसेद्वंशौ रज्जवोऽष्टौ विकोणगाः ।
द्विपदाष्षट्पदास्तास्तु वास्तुं तत्रार्चयेद्यथा ॥ ५८ ॥
आकुञ्चितकचं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत्पूजासु कुड्यादिनिवेशेत्वधराऽऽननम् ॥ ५९ ॥

---

१. आत्मेति इदमनुसन्धानं विष्णुभागे । एवमेव "विद्यातत्त्वशिवतत्त्वाभ्यां नमः" इति रुद्रभागे बोध्यम् । २. वास्तुमण्डलमिति वास्तुपूजानिमित्तकालः ईशानशिवगुरुदेवपद्धतौ प्रोक्तः "दीक्षासु देवालयमण्डपानां वेश्मादिकृत्येऽपि च विघ्नशान्तौ । वास्त्वीशपूजां प्रथमं विदध्यात् संवर्तयेत्सर्वसमीहितानाम्" इति ।

जानुनी[1] कूर्परासक्ते दिशि वातहुताशयोः ।
पैत्र्यां पादपुटे रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥ ६० ॥
अस्य[2] देहे समारूढा देवताः पूजिताश्शुभाः ।
अष्टौ कोणाधिपास्तत्र कोणार्धेष्वष्टसु स्थिताः ॥ ६१ ॥
षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात् ।
मध्ये चतुष्पदो ब्रह्मा शेषास्तु परिखास्स्मृताः ॥ ६२ ॥

वर्ज्यद्वादशमर्मनिर्देशः ।

समस्त[3]नाडीसम्पातो महामर्मा[4]म्बुजं[5] हलम् ।
त्रिशूलं[6] स्वास्तिकं वज्रं महास्वस्तिकसम्पुटौ ॥ ६३ ॥

---

१. जानुनी इति तथाचोक्तमीशानशिवगुरुदेवपद्धतौ "ईशानेऽस्य शिरोनिवेशितमभूद्वास्तोष्पतेर्मारुते वह्नौ चापि करद्वयं पदयुगं नक्तञ्चरे स्थापितम् ।" इति । २. अस्य देहे इति तथा च तत्रैव "पर्जन्यो नयने दितिश्च वदने स्यादापवत्सो गळे कर्णौ चाप्यदितिस्तथार्गलयुतावंसौ जयन्ताश्रितौ । शक्रश्चाथ निशाकरश्च भुजयोः पृष्ठे तु रुद्रस्स्थितः सावित्रस्सविता च रोगसहिताश्शोषश्च पाण्योस्स्थिताः । नाभौ स्याच्चतुराननोऽस्य कुचयोर्भूभृत्तथैवार्यमा मित्रश्चापि विवस्वता तदुदरे गुह्येन्द्रकश्चापरः ॥" इति । ३. समस्तेति लक्ष्मीयशोवत्याद्यो नव प्राचीमुखोद्गताः धन्याप्राणाविशालाद्या नव सौम्यमुखोद्गताः नाड्यः समस्तनाडीसम्पातस्सन्धिरित्यभिधीयते । ४. महामर्मेति "वास्तुमध्ये तु केतुस्स्यान्महामर्म तदुच्यते" इति महामर्मलक्षणमुक्तं कामिके । ५. अम्बुजमिति "अष्टसूत्रसमायोगादम्बुजं परिकीर्तितम्" इत्यम्बुजलक्षणम् । ६. त्रिशूलमिति "वंशसूत्रसिरासङ्गात् शूलमित्यभिधीयते । महाशूलं चतुष्प्राणं त्रिगुणं तनुशूलकम्" इति ।

(त्रिकण्ट) श्री[1]कटि[2]र्मणिबन्धं च सुविशुद्धपदं तथा ।
इति द्वादश मर्माणि वास्तोर्भित्त्यादिषु [3]त्यजेत् ॥६४॥

वास्तुदेवताबलिविधिः ।

साज्यमक्षतमीशाय पर्जन्यायाम्बुजोदकम् ।
ददीताथ जयन्ताय पताकां कुङ्कुमोज्ज्वलाम् ॥ ६५ ॥
[4]रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् ।
सत्याय घृतगोमूत्रे माषभक्तं[5] भृशाय च ॥ ६६ ॥
विमांसमन्तरिक्षाय सक्तुं वेत्यष्ट पूर्वतः ।
मधुक्षीराज्यसम्पूर्णां विदध्याद्वह्नये स्रुचम् ॥ ६७ ॥
लाजान् पूष्णे सुवर्णाम्बु वितथाय निवेदयेत् ।
दद्याद्गृहक्षते क्षौद्रं यमराजे फलोदकम् ॥ ६८ ॥
गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणः ।
मृगाय यवपर्णानि याम्यामित्यष्टदेवताः ॥ ६९ ॥

---

१. प्रान्तनाडीसम्पातश्श्रीकटिर्मणिबन्धयुक् । २. मणिबन्धमिति "सूत्रपञ्चसमायोगान्मणिबन्धं प्रकीर्तितम्" इत्युक्तम् । ३. त्यजेदिति तथा च कामिके स्पष्टं "हृदये वंशके शूले सूत्रसन्धौ च मर्मके । सिरायामष्टके षट्के चतुष्के लाङ्गलेऽपि च । देवालयादिकं नोक्तं कृतं चेत्कुलनाशनम्" इति । ४. रक्तान्नदीपैश्च यजेन्महेन्द्रमित्यन्यत्रोक्तम् । ५. गोधूमकान्नेन भृशस्य पूजा इति ईशानशिवगुरुदेवपद्धतिः । एवमेव बलिविधाने प्रकारभेदो दृश्यते ।

पित्रे तिलोदनं क्षीरवृक्षजं दन्तधावनम् ।
दौवारिकाय देवाय प्रदद्याद्दानमुद्रया ॥ ७० ॥

सुग्रीवाय दिशेत्पूपान् पुष्पदन्ताय दर्भकम् ।
रक्तं प्रचेतसे पद्ममसुराय सुरासवम् ॥ ७१ ॥

घृतप्लुतोदनं शोषे रोगाय घृतमण्डकान् ।
लाजान् वा पश्चिमाशायां देवाष्टकमितीरितम् ॥ ७२ ॥

मारुताय ध्वजं शुक्लं पीतं नागाय केसरम् ।
मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपसुसंस्कृतम् ॥ ७३ ॥

सोमाय पायसं साज्यं (शालूकं) वल्लूरं[1] मृग(ये)के दिशेत् ।
मोदकं[2] दितयेऽदित्यै (पूरी[3])मित्युत्तराष्टकम् ॥ ७४ ॥

मोदकान् ब्रह्मणः प्राच्यां षट्पदाय मरीचये ।
सवित्रे रक्तपुष्पाणि वह्न्यधः कोणकोष्ठके ॥ ७५ ॥

तदधः कोष्ठके दद्यात्सावित्र्यै च कुशोदकम् ।
दक्षिणे चन्दनं रक्तं षट्पदाय विवस्वते ॥ ७६ ॥

---

१. वल्लूरमिति "शुष्कमांसं मृगे दद्या"दिति मयमते प्रोक्तम् । २. मोदकमिति "लोपीमदितये" इति मातृकायां विद्यते । "देवमातरि मोदकम्" इति मयमतमनुसृत्यैवं न्यस्तम् । ३. शालिमित्युत्तराष्टकामिति सुवचं "माषान्नभक्ष्यैरदितिं यथावदि"ति ईशानशिवगुरुदेवपद्धतिः "अदितौ तिलभक्ष्येण" इति मयमतम् ।

हरिद्रौदनमिन्द्राय रक्षोधःकोणकोष्ठके ।
इन्द्रंजयाय मिश्रान्नं इन्द्राधस्तान्निवेदयेत् ॥ ७७ ॥

वारुण्यां षट्पदासीने मित्रे सगुडमोदनम् ।
रुद्राय घृतसिद्धान्नं वायुकोणाधरे पदे ॥ ७८ ॥

तदधो रुद्रदासाय मांसमार्द्रमथोत्तरे ।
ददीत माषनैवेद्यं षट्पदस्थे धराधरे ॥ ७९ ॥

आपाय शिवकोणाय तद्वत्सायैव तत्तले ।
क्रमाद्दद्याद्दधि क्षीरं पूजयित्वा विधानतः ॥ ८० ॥

चतुष्पदनिविष्टाय ब्रह्मणे मध्यदेशतः ।
पञ्चगव्याक्षतोपेतं चरुं साज्यं निवेदयेत् ॥ ८१ ॥

ईशादिवायुपर्यन्तकोणेषु च यथाक्रमम् ।
वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेद्यथा ॥ ८२ ॥

चरक्यै सघृतं मांसं विदार्यै दधि पङ्कजम् ।
पूतनायै फलं पित्तं रुधिरं च निवेदयेत् ॥ ८३ ॥

अस्थीनि पापराक्षस्यै रक्तपित्तफलानि च ।
ततो माषौदनं प्राच्यां स्कन्दाय विनिवेदयेत् ॥ ८४ ॥

अर्यम्णे दक्षिणाशायामपूपान् कृस(रा)रैर्युतान् ।
जृम्भकाय च वारुण्यामामिषान् रुधिरान्वितान् ॥ ८५ ॥

उदीच्यां पिलिपिञ्छाय रक्तान्नं कुसुमान्वितम् ।
मयागमानुसारेण वास्तुपूजा सुकीर्तिता ॥ ८६ ॥

पूजयेद्दर्भसिद्धार्थकुशदध्यक्षतैस्तिलैः ।
गृहेऽपि वर्तयेद्वास्तु किञ्चैकाशीतिकोष्ठके ॥ ८७ ॥

त्रिपदं रज्जवः कार्याः षट्पदाश्च यथापुरा ।
ईशाद्याः पादिकास्तस्मिन्नापाद्याश्च द्विकोष्ठगाः ॥८८॥

षट्पदस्था मरीच्याद्या ब्रह्मा नवपदस्स्मृतः ।
ईशादिषु चरक्याद्याश्चतस्रः पूजयेद्बहिः ॥ ८९ ॥

आहुतित्रितयं दद्यात्प्रतिदेवमनुक्रमात् ।
दत्वा भूतबलिं लग्ने शिलान्यासमुपक्रमेत् ॥ ९० ॥

नवशिलान्यासविधिः ।

मध्यश्वभ्रे न्यसेच्छक्तिं कुम्भञ्चानन्तमन्तिमम् ।
लकारारूढमूलेन कुम्भेऽस्मिन् धरणीं शिलाम् ॥ ९१ ॥

कुम्भानष्टौ सुभद्रादीन् दिक्षु पूर्वादिषु क्रमात् ।
लोकपालाणुभिर्न्यस्य श्वभ्रेषु न्यस्तशक्तिषु ॥ ९२ ॥

शिलास्तेष्वथ(नं) सन्दध्यात्क्रमशोऽथनिवेशयेत् ।
शम्बरैर्मूर्तिनाथान्तं यथा स्युर्भित्तिमध्यतः ॥ ९३ ॥

---

१. न्यस्तेति विन्यस्ताऽऽधारशक्तिषु इत्यर्थः ।

तासु धर्मादिकानष्टौ कोणे कोणविभागतः ।
सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः ॥ ९४ ॥

अजिताद्याश्च पूर्वादिजयादिष्वथवा न्यसेत् ।
ब्रह्माणं चोपरि न्यस्य व्यापकं च महेश्वरम् ॥ ९५ ॥

चिन्तयेदेष्यदध्वानं व्योमप्रासादमध्यगम् ।
बलिं दत्वा जपेदस्त्रं विघ्नदोषनिवारणम् ॥ ९६ ॥

पञ्चशिलान्यासविधिः ।

शिलापञ्चकपक्षेऽपि मनागुद्दिश्यते यथा ।
मध्ये पूर्णां शिलां न्यस्य समुद्रकलशोर्ध्वतः ॥ ९७ ॥

पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ।
मध्यभावाच्चतस्रोऽपि मातृसद्भावसम्मताः ॥ ९८ ॥

शिलाप्रार्थनाक्रमः ।

ओं पूर्णे[1] त्वं महाविद्ये सर्वसन्दोहलक्षणे ।
सर्वं सम्पूर्णमेवाऽत्र कुरुष्वाङ्गिरसस्सुते ॥ ९९ ॥

ओं नन्दे[2] नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम् ।
प्रासादे तिष्ठ संहृष्टा यावच्चन्द्रार्कतारकम् ॥ १०० ॥

---

१. **पूर्णे** इति वक्ष्यमाणतिष्ठास्मिन्नीशरूपिणीत्येतदनन्तरमेवैतत्पद्यं स्थातव्यमिति भाति । २. **नन्दे** इति "सम्प्रार्थयेच्छिलाः प्राज्ञो नन्दाद्या मूर्तिपैस्सह" इति सिद्धान्तशेखरोक्तिः । शिलाप्रार्थनामाह ओं पूर्णे त्वं महाविद्ये इत्यादिना ।

आयुः कामं श्रियं नन्दे देहि वासिष्ठि देहिनाम् ।
अस्मिन् रक्षा त्वया कार्या प्रासादे यत्नतस्सदा ॥

ओं भद्रे सर्वदा भद्रं लोकानां कुरु काश्यपि ।
आयुर्दा कामदा देवि श्रीप्रदा[1] च सदा भव ॥ १०२ ॥

ओं जयेऽत्र सदा देवि तिष्ठ त्वं स्थापिता मया ।
नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि ॥१०३॥

ओं रिक्ते रिक्तदोषघ्नि सिद्धिमुक्तिप्रदे शुभे ।
सर्वदा सर्वदेवे[2]स्थे तिष्ठा[3]ऽस्मिन्नीशरूपिणि ॥ १०४ ॥

---

१. श्रीप्रदेति विघ्नहर्त्री सदा भवेति सिद्धान्तशेखरपाठः । २. देवेति देशेति सिद्धान्तशेखरकृत् । ३. तिष्ठेति एतत्पद्यानन्तरं सिद्धान्तशेखरे अवशिष्टानामपि शिलानां ध्यानक्रमः प्रोक्तः सोऽस्मिन्नादर्शे नष्ट इति हेतोरत्र प्रतन्यते। तथाहि "पूर्णे पूर्णमहाविद्ये सर्वं मे गिरिजेश्वरि । सम्पूर्णं यज्ञकर्माऽस्तु प्रासादे त्वत्प्रसादतः ॥ देवि त्वमजिते कर्तुर्विजयं देहि सर्वदा । आकल्पं कल्पितं देवि प्रासादं त्वदधिष्ठया ॥ ओं अपराजिते देवि शत्रूणां जयमावह । प्रासादे त्वत्प्रसादेन मान्तरायोऽस्तु कर्हिचित् ॥ ओं विजये विजयी भूयात् कर्ता महात्म्यतस्स्थितः । आचन्द्रतारकं भूयात् प्रासादस्स्थिरदैवतः ॥ ओं (शिवाङ्गने) शिवे मङ्गळे देहि मङ्गळं शिवदेहिनाम् । यद्यमङ्गळमन्त्री तु तच्चाद्या मम सर्वदा ॥ ओं देवि धरणी पृष्ठे सर्वलोकैकधारिणि । कुरु कर्तुरभीष्टार्थे स्थैर्यं तु शुभदाऽऽलये ॥ सम्प्रार्थ्यैवं शिलास्सर्वाः प्रासादचरणान्नरः । ध्यायन्नभ्रामयन् धर्मं तस्य तत्त्वत्रयं न्यसेत् ॥ सर्वदिक्षु बलिं क्षिप्त्वा जपेत्पाशुपतास्त्रकम् । सर्वविघ्नप्रशान्त्यर्थं पूजितं विसृजेन्मखम् ॥" इति ।

भर्ट्टनायतमध्ये त्वा तत्र तत्त्वत्रयं न्यसेत् ।
प्रायश्चित्तं ततो हुत्वा विधिना विसृजेन्मखम् ॥१०५॥

क्रियाकाण्डक्रमावळ्यां श्रीमता सोमशम्भुना ।
संक्षेपेण शिलान्यासविधानमिति कीर्तितम् ॥
॥ १०६-१३२९ ॥

इति श्रीक्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ
काम्यविधौ शिलान्यासविधिस्सम्पूर्णः ।

---

# अथ शिवलिङ्गप्रतिष्ठाविधौ

## प्रतिष्ठाकालविधानक्रमः ।

---

अथ लिङ्गप्रतिष्ठाया विधानमभिधीयते ।
सा सदा क्रियते मुक्त्यै भुक्त्यै देवेदिने सति ॥ १ ॥

विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके ।
गुरुशुक्रोदये कार्या प्रथमे करणत्रये ॥ २ ॥

---

१. भट्टेति प्रासादायतमध्ये त्वं इति वर्तितव्यम् । २. देवदिने सति इति तथाचोक्तं पूर्वकारणे "अयने दक्षिणे नेष्टं प्रशस्तं चोत्तरायणे" इति । ३. केचिच्चैत्रं च विन्दन्ति माघमासं तथाऽपरे इति सिद्धान्तशेखरकृत् ।

शुक्लपक्षे विशेषेण कृष्णेऽप्यापञ्चमीदिनम् ।
च[1]तुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥ ३ ॥
शोभनास्तिथयश्शेषाः क्रू[2]रवा रविवर्जिताः ।
तारायोगविशेषं च जानीयाज्ज्योतिषागमे ॥ ४ ॥
शतभिषक्धनिष्ठार्द्रा अनूराधोत्तरत्रयम् ।
रोहिणीश्रवणश्चेति स्थिरारम्भे महोदयाः ॥ ५ ॥
ल[3]ग्नं च कुम्भासिंहाळितुलावृषभधन्विनाम् ।

प्रतिष्ठार्थं वर्णभेदेन ऋक्षभेदः ।

भेदो ऋक्षस्य वर्णानां कथितः पिङ्गला(मते)गमे ॥६॥
पुष्यहस्तोत्तराषाढपूर्वाषाढाश्च रोहिणी ।
ऋक्षाण्येतानि विप्रस्य प्रशस्तान्यथ राजनि ॥७॥
पुनर्वसुस्तथा चित्रा धनिष्ठा श्रवणान्विता ।
विशस्तु रेवती भद्रा सार्धमुत्तरयाऽश्विनी ॥ ८ ॥

---

१. चतुर्थीमिति "शुक्लपक्षे चतुर्थी च अष्टमी च चतुर्दशी । नवमी प्रतिपच्चैव पञ्चतिथ्यशुभास्स्मृता" इति कारणे प्रोक्तम् । २. क्रूरवारेति रोहिण्याऽपि च संयुक्तः शनिवारोऽपि शोभनः । युक्तः पूष्णा सवित्रा च सूर्यवारः परस्स्मृतः । विश्वेदेवाश्विनीयुक्तः कुजवारोऽपि शस्यते" इति सिद्धान्तशेखरकृत् । ३. लग्नमिति कारणे तु "राशिष्वपि धनुश्चैव चत्वारश्चरराशयः । अप्रशस्ता इति ख्यातारशेषास्तु शुभदास्स्मृताः ॥" इति प्रोक्तम् ।

शूद्रस्य च मघा श्रेष्ठा स्वाती पुष्यश्च फल्गुनी ।
एतान्यपि विशेषेण दृश्यन्ते पारमेश्वरे ॥ ९ ॥

मण्टपविधिः ।

धाम्नः[1] पञ्चगुणां भूमिं त्यक्त्वा वा धामसम्मिताम् ।
ह(स्ता)स्तद्वादशसोपानात्कुर्यान्मण्टपमग्रतः ॥ १० ॥
चतुरश्रं चतुर्द्वारं स्नानार्थं तु तदर्धतः ।
एकास्यं चतुरास्यं वा रौद्र्यां प्राच्युत्तरेऽथवा ॥ ११ ॥
त्रयाणामाद्यलिङ्गानां विदध्यान्मण्टपत्रयम् ।
हास्तिकेऽष्टकरं शेषा(वै)एकैककरवृद्धितः ॥ १२ ॥
वर्धयेदन्यलिङ्गानां द्वौ करौ प्रतिमण्टपम् ।
यावन्नवकरे लिङ्गे द्वाविंशतिकरो भवेत् ॥ १३ ॥
हास्तिके दशहस्तो वा मण्टपोऽर्ककरोऽथवा ।
द्विहस्तोत्तरया[2] वृद्ध्या शेषं स्यान्मण्टपाष्टकम् ॥ १४ ॥
पादादि[3]वृद्धलिङ्गेषु कुर्यान्मानानुसारतः ।
बाणरत्नजलोहादेर्मण्टपं हास्तिके यथा ॥ १५ ॥
यः प्रासादो भवेदेषां कुर्याद्वा तस्य मण्टपम् ।
प्रासादास्सर्वलिङ्गाश्च ज्ञातव्याश्शिवशास्त्रतः ॥ १६ ॥

---

१. धाम्नः हर्म्यस्य । २. द्विहस्तेति द्विद्विहस्तप्रवृद्धितः इत्यर्थः । ३. पादेति पादादिवृद्धलिङ्गेषु पादवृद्धाश्च मण्टपा इति सिद्धान्तशेखरकृत् ।

घनो घोषो विराजश्च काञ्चनः कामरामकौ[1] ।
सुवेषो घार्घरो दाक्षो नवानां नवमण्टपाः ॥ १७ ॥

चतस्रः कोणगास्स्तूणा द्वे द्वे द्वारेषु हास्तिके ।
विस्तीर्णे तु यथाशोभं ता भवन्त्यपरा अपि ॥ १८ ॥

[2]वेदी चतुष्करा मध्ये[3] कोणेषु स्तम्भसंयुता ।
अष्टाङ्गुलोच्छ्रितान्येषु वेदीनां मानमुच्यते ॥ १९ ॥

द्व्यङ्गुलं तु समुच्छ्राये विस्तारे तु ....करम् ।
क्रमेण वर्धयेदासां यावन्तो रविसंख्यया ॥ २० ॥

सान्तरे वर्धयेत्पादं विस्ताराद्रुच्छ्रयादपि ।
मध्ये पदेऽथवा वेदमण्टपे नवधा कृते ॥ २१ ॥

कुण्डनिर्माणविधिः ।

वेदीपदान्तरं त्यक्त्वा कुण्डानि नव पञ्च वा ।
कुर्यान्मन्त्रक्रमादीशे पञ्चमं नवमं गुरोः ॥ २२ ॥

एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः परम् ।
शरतानि....वृत्तानि चतुरश्राणि वा सदा ॥ २३ ॥

हास्तिके हास्तिकं कुण्डं शेषाणां द्व्यङ्गुलोत्तरम् ।
बाणरत्नादिलिङ्गानां विदध्यान्मण्टपोचितम् ॥ २४ ॥

---

१. रामकौ रागकौ इति सिद्धान्तशेखरे । तथोत्तरत्राऽपि घर्घरो दक्षो इति विद्यते । २. वेदीति सिद्धान्तशेखरे वेदीविधानं किञ्चिद्विशेषेणोक्तम् । ३. मध्ये स्नानमण्टपाधिवासनमण्टपयोर्मध्ये ।

होमसङ्ख्याधिक्यभेदेन कुण्डविस्तारकथनम् ।

कुण्डानन्यानपि स्तोकान् प्रसङ्गेन वदाम्यहम् ।
मुष्टिमात्रं[1] दशाद्यस्य शते चारत्निमात्रकम् ॥ २५ ॥

हास्तं सहस्रहोमे स्यादयुते च द्विहस्तकम् ।
लक्षे चतुष्करं कुण्डं प्रयुते षट्करं मतम् ॥ २६ ॥

शिष्टमष्टकरं कुर्यात्कोटिहोमेषु नाधिकम् ।

काम्यभेदेन कुण्डस्वरूपभेदविधिः ।

दाहायाग्नौ[2] भगाकारं द्वेषे खण्डेन्दु दक्षिणे ॥ २७ ॥

त्र्यश्रं क्षयाय नैर्ऋत्यां शुभे वृत्तं तु पश्चिमे ।
सर्वसौख्यप्रदं नित्यं षडश्रं वायवं गतम् ॥ २८ ॥

कुण्डं कुशेशयाकारमुत्तरे पुष्टिवर्धनम् ।
रौद्र्यां[3] भयदमष्टाश्रमिति दृष्टं शिवागमे ॥ २९ ॥

कुण्डस्वरूपक्रमः ।

तिर्यक् खातं समं खातमेकमेखलया सह ।
बहिरेकाङ्गुलः कोणः द्व्यङ्गुलः क्वचिदागमे ॥ ३० ॥

---

१. मुष्टिमात्रमिति "शतार्धे मुष्टिमात्रं स्यात् शते चारत्निसंयुतम् । हस्तमात्रं सहस्रे स्यात् द्विहस्तं चाऽयुते मतम् ॥ लक्षार्धे त्रिकरं कुण्डं लक्षहोमे चतुष्करम् । कुण्डं पञ्चकरं प्रोक्तं दशलक्षाहुतिक्रमात् ॥ षड्-हस्तं लक्षविंशत्यां कोट्यर्धे सप्तहस्तकम् । कोटिहोमे सहस्तं स्यात् कुण्डं नोर्ध्वं तदूर्ध्वतः ॥" इति सिद्धान्तशेखरकृत् । २. दाहायेति एतेषां योन्यादि कुण्डानां लक्षणं प्रोक्तं सिद्धान्तशेखरे । ३. रौद्र्या भय इति मातृकापाठ ।

तद्बहिर्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ।
षड्बाणाब्धित्रिपक्षैर्वा क्रमशः पञ्चमेखलाः ॥ ३१ ॥
अङ्गुलैष्षड्भिरेखाभिः कुण्डाका(र)रा इमा मताः ।
तासामुपरि योनिस्स्यान्मध्येऽश्वत्थदलाकृतिः ॥ ३२ ॥
उच्छ्रायेणाङ्गुलं तस्या विस्तारेणाङ्गुलाष्टकम् ।
दैर्घ्यं कुण्डार्धमानेन कुण्डकण्ठसमोऽधरः ॥ ३३ ॥
पूर्वाग्नियाम्यकुण्डानां योनिस्स्यादुत्तरानना ।
पूर्वानना तु शेषाणामैशान्येऽन्यतरा तयोः ॥ ३४ ॥
कुण्डा(ना)नां यश्चतुर्विंशो भागस्सोङ्गुलसंज्ञकः ।
विभज्यानेन कर्तव्या मेखलाकण्ठनाभयः ॥ ३५ ॥

तोरणविधानक्रमः ।

[1]प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ।
पूर्वादितो विधातव्या यद्वाऽऽद्यन्तविपर्ययः ॥ ३६ ॥
शान्तिभूतिबलारोग्यनामान्येषां यथाक्रमम् ।
अलाभादेकमेतेषां सर्वाशासु निवेशयेत् ॥ ३७॥
पञ्चषट्सप्तहस्तानि तोरणानि [2]कनीयसाम् ।
त्रीणां [3]मध्यमलिङ्गानां वृध्याऽ[4]ष्टाङ्गुलया क्रमात् ॥ ३८॥

---

१. प्लक्षेति 'पूर्वं वा प्लक्षसम्भूतं न्यग्रोधं चोत्तरे मतं' इति सिद्धान्तशेखरे । २. कनीयसामिति त्रिहस्तलिङ्गानां इत्यर्थः । ३. मध्यमेति षड्ढस्तलिङ्गानामित्यर्थः । ४. अष्टेति "चतुर्हस्तादिलिङ्गानामष्टाङ्गुलविवृद्धितः । सप्तहस्तादिलिङ्गानां चतुरङ्गुलवृद्धितः" ॥ इति सिद्धान्तशेखरकृत् ।

चतुरङ्गुलया वृद्ध्या तोरणानि महीयसाम्[1] ।
एवं नवकरे लिङ्गे तत्सार्धाष्टकरं भवेत् ॥ ३९ ॥

खातो हस्तप्रमाणस्स्यात्तोरणानां कनीयसाम् ।
मध्यमानां क्रमेणाथ चतुरङ्गुलवृद्धितः ॥ ४० ॥

त्रयाणामुत्तमानां तु खातस्सार्धकरो मतः ।
क्रमात् द्व्यङ्गुलया वृद्ध्या मोहशूरोत्तरे पुनः ॥ ४१ ॥

सर्वेषां पञ्चमांशेन खातः कार्य इतीरितः ।
विस्तारं तूच्छ्रयादर्धं तुल्यो वा धारिकास्समाः ॥ ४२ ॥

बाहुल्यं पञ्चहस्तस्य तोरणस्य षडङ्गुलम् ।
शेषाणां वर्धयेदत्र क्रमादङ्गुलमङ्गुलम् ॥ ४३ ॥

प्रथमेऽष्टाङ्गुलं शल्यमन्येषामङ्गुलोत्तरम् ।
विदध्यादानुपूर्व्येण नासापिण्डं च तत्समम् ॥ ४४ ॥

उच्छ्रायपञ्चमांशेन शूलं पक्षांशनिर्गमम् ।
निजोच्छ्रायत्रिभागेन शूलपक्षप्रविस्तृतिः ॥ ४५ ॥

प्रवेशं द्व्यङ्गुलं चास्य क्रमादेकाङ्गुलोत्तरम् ।
ललाटे स्वस्तिकं पद्मं पद्मांशाभं निवेशयेत् ॥ ४६ ॥

रम्भास्तम्भान् प्रतिद्वारं मालाश्चाम्रदळैः कृताः ।
वाहयेत्पश्चिमद्वारं (वि)पिदध्यादपराणि तु ॥ ४७ ॥

---

१. महीयसां नवहस्तलिङ्गानाम् ।

## पताकाध्वजकरणविधिः ।

इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा ।
शुक्लाभा हेमवर्णा च पताका स्फटिकोपमा ॥ ४८ ॥

पूर्वादितो विधातव्या रक्ता च ब्रह्मणः प(ते)तेः ।
नीला च तस्य नैर्ऋत्यां मध्ये चित्राऽथवा सिता ॥४९॥

पञ्चहस्ता ध्वजास्तद्वत्कार्या द्विकरविस्तृताः ।
सप्तहस्ताः पताकास्तु विंशत्यङ्गुलविस्तृताः ॥ ५० ॥

हस्तप्रवेशिता दण्डा ध्वजानां पञ्चहास्तिकाः ।
दश हस्ताः पताकानां पञ्चमांशप्रवेशिताः ॥ ५१ ॥

सप्तभिर्दशभिः कार्या विंशत्या वा करैर्ध्वजाः ।
अधमे मध्यमे श्रेष्ठे हस्तद्वितयविस्तृताः ॥ ५२ ॥

अथवाऽष्टकरा ज्येष्ठा विस्तारेण द्विहास्तिकाः ।
दशहस्ताः पताकानां पञ्चमांशप्रवेशिताः ॥ ५३ ॥

अर्धहानिक्रमाच्चैषामिति दृष्टं शिवाऽऽगमे ।
द्विगुणं ब्रह्मणो भागात्पीठं क्षीरतरूद्भवम् ॥ ५४ ॥

पङ्कजाङ्कं चतुष्पादमुच्छ्राये षोडशांशकम् ।
अथवोक्तसमुच्छ्रायं विस्तारे द्विगुणं ततः ॥ ५५ ॥

विस्तारद्विगुणाऽऽयामं भद्रपीठं कनीयसाम् ।
चतुरङ्गुलया वृद्ध्या तदन्येषामनुक्रमात् ॥ ५६ ॥

नवानां त्रीणि पीठानि दृश्यन्ते विस्तरागमे ।

मृत्तिकादिसङ्ग्रहणविधिः ।

पर्वताग्रान्नृपाद्द्वारां नदीतीरद्वयात्कुशात् ॥ ५७ ॥
(लक्ष्मीवा) दन्तिदन्ताग्रात्तथा वृषभश्रृङ्गतः ।
पद्मषण्डात् (द्विराभाच) गोष्ठादपि चतुष्पथात् ॥ ५८ ॥
मृत्तिका[1] द्वादश ग्राह्या वैकुण्ठेऽष्टौ पिनाकिनि ।
न्यग्रोधोदुम्बराश्वत्थचूतजम्बूत्वगुद्भवम् ॥ ५९ ॥
कषायपञ्चकं ग्राह्यमात्तपञ्चफलाष्टकम् ।
तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् ॥ ६० ॥
शङ्खपुष्पफलस्वर्णरत्नगोश्रृङ्गवारि च ।
स्नानायोपाहरेत्पञ्चगव्यं पञ्चामृतं तथा ॥ ६१ ॥
पिष्टनिर्मितवज्राद्दिद्रव्यं निर्मर्चनाय च ।
सहस्रसुषिरं कुम्भं मङ्गलाय च रोचनाम् ॥ ६२ ॥
शतमोषधिमूलानां विजया लक्ष्मणा बला ।
गळूच्यतिबलापाठा सहदेवा शतावरी ॥ ६३ ॥
ऋद्धिस्सुवर्चला वृद्धिस्स्नानायोक्ताः पृथक् पृथक् ।
रक्षायै तिल(शू)दर्भाद्यं भस्मस्नाने तु केवलम् ॥ ६४ ॥
यवगोधूमबिल्वानां चूर्णानि च विरूक्षयेत् ।
विलेपनं सकर्पूरं स्नानार्थं कुम्भगडुकान् ॥ ६५ ॥

---

१. मृत्तिकेति मृत्तिकाहरणविधिः सिद्धान्तशेखरे सुस्पष्टं विद्यते ।

मण्टपार्श्यां विताने द्वे कुर्याच्चित्रैस्सदम्बरैः ।
खट्वाङ्गं तुलिकायुग्मं सोपधानं सवस्त्रकम् ॥ ६६ ॥

कुर्याद्वित्तानुसारेण शयने ल(क्ष)क्ष्मकल्पने ।
घृतक्षौद्रयुतं पात्रं कुर्यात्स्वर्णशलाकिकाम् ॥ ६७ ॥

त्रिद्व्येकमाषिकास्ताश्च क्रमात् ज्येष्ठादिषु त्रिषु ।
वर्धनीं शिवकुम्भं च लोकपालघटानपि ॥ ६८ ॥

वास्तुलक्ष्मीगणेशानां कलशानपरानपि ।
धान्यपुञ्जकृताधारास्सवस्त्रस्रग्विभूषिताः ॥ ६९ ॥

सहिरण्यास्समालब्धा गन्धपानीयपूरिताः ।
पूर्णपात्रफलाधाराः पल्लवास्यास्सलक्षणाः ॥ ७० ॥

कुम्भास्सर्वे विधातव्यास्सवस्त्राः कुण्डतोरणाः ।
वस्त्रैराच्छादयेत्स्तम्भानारभेद्वौरसर्षपान् ॥ ७१ ॥

विकिरार्थं तथा लाजान् ज्ञानखड्गञ्च पूर्ववत् ।
सापिधानां चरुस्थालीं दर्वीं तां मृदुनिर्मिताम् ॥ ७२ ॥

घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गे कृते तथा ।
विष्टरांस्त्रिशता दर्भदलैश्चाहुः प्रमाणकान् ॥ ७३ ॥

चतुरश्चतुरस्सत्वक्पलाशान् परिधीनपि ।
तिलपात्रं हविः पात्रमर्घ्यपात्रं सयन्त्रिकम् ॥ ७४ ॥

पलत्रिंशतिमानानि घण्टाधूपप्रदानकम् ।
स्रुक्स्रुवौ त्रिकटान् पीठं व्यजनं शुष्कमिन्धनम् ॥७५॥
मुक्तामुक्तानि पुष्पाणि बिल्वपत्राणि गुग्गुलुम् ।
चन्दनं कुङ्कुमं धूपं प्रदीपान् घृतपूरितान् ॥ ७६ ॥
अक्षतानि त्रिसू(त्रं)त्रीं च गव्यमाज्यं यवांस्तिलान् ।[1]
कुशाननतिदीर्घांश्च शान्तौ तु मधुरत्रयम् ॥ ७७ ॥
पायसं यज्ञवृक्षोत्थास्समिधो दशपर्वकम् ।
अङ्गुळं त्रिविधं ज्ञेयं शल्यपादप्रभेदतः ॥ ७८ ॥
अधमं मध्यमं ज्येष्ठं स्वीकुर्वीत यथारुचि ।

स्रुक्स्रुवलक्षणविधिः ।

षट्त्रिंशदङ्गुलैर्दीर्घां स्रु(वं)चं वा बाहुसम्मिताम् ॥७९॥
ज्येष्ठमध्याधमं कुर्यादेकैकाङ्गुल(भा)ह्रासतः ।
अष्टैकसप्तभिस्तस्या वेदीकण्ठौ मुखं क्रमात् ॥ ८० ॥
आनाभ्यधो मानदण्डो रसविंशतिभिर्भवेत् ।
रामवेदाङ्गुलं कुम्भो गण्डं युगयवाङ्गुलम्[2] ॥ ८१ ॥
खातं वेदाङ्गुलैर्वृत्तं द्वियवं त्र्यङ्गुलं खनेत् ।
मुखाग्रकण्ठयोरस्या वेदत्रिंशेन विस्तृतिम् ॥ ८२ ॥

---

१. यवास्तिलाः इति मातृकापाठः । २. युगेति युगधिमाङ्गुलेति मातृकापाठः ।

कनिष्ठाङ्गुलविस्तारां[1] घृतनिर्गमपद्धतिम् ।
मुखमर्धाङ्गुलं[2] वृत्तं स्रुवायामो जिनाङ्गुलः ॥ ८३ ॥
द्वाविंशत्यङ्गुलो दण्डो वृत्तमस्य कृताङ्गुलम् ।
कार्षिको द्व्यङ्गुलं खातः पङ्के मृगखुराकृतिः ॥ ८४ ॥
मूलेचाग्रे तु दण्डस्य गण्डिकं कणवद्भवेत् ।
श्रीपाणिशशिपादाग्रबीजमाम्रविकङ्कतम् ॥ ८५ ॥
स्रुचि वृक्षाः प्रशस्यन्ते किंशुकाद्याश्च याज्ञिकाः ।

प्रतिकुण्डं विष्टरादिनिवेशनविधिः ।

अर्का हि ग्रहशान्त्यर्थं समिधो(द्भव)वंशजाः ॥ ८६ ॥
खादिरोत्था ह्यपामार्गपिप्पलोदुम्बरोद्भवाः ।
शमी[3]दूर्वाकुशोद्भूता अष्टाधिकशतान्विताः ॥ ८७ ॥
आहरेत्तु यथासंख्यं तदभावे यवांस्तिलान् ।
एतानि विष्टरादीनि प्रतिकुण्डं निवेशयेत् ॥ ८८ ॥
ग्रहोपकरणे यच्च स्थाली दर्वी पिधानकम् ।
मुसलोलूखले खड्गं छुरिका छत्रचामरे ॥ ८९ ॥
(शिलांपतन्) ग्रहस्थाली यन्त्रिका पादुकायुगम् ।
दर्पणं पूर्णपात्रं च सिन्दूराञ्जनभाजनम् ॥ ९० ॥

---

१. विस्तारामिति विस्तारा इति मातृकापाठः । २. मेखबद्धाङ्गुला वृत्ता इति मातृकापाठः । ३. शमीति शमीदूर्वाङ्कुशोद्भूतमष्टाधिक इति मातृकापाठः ।

मार्जनं योगपट्टं च पट्टं च विनिवेशयेत् ।
स्नानेऽधिवासे पूजायां प्रतिष्ठायां च वासंसः[1] ॥ ९१ ॥
दद्याद्युग्मं निवेशाय शिलावेदीवृषाय च ।
मुद्रामकुटवासांसि हारकुण्डलकङ्कणान् ॥ ९२ ॥
कुर्यादाचार्यपूजार्थं वित्तशाठ्यविवर्जितम् ।
तत्पादपादहीना तु मूर्तिभृच्छस्त्रजापिनाम् ॥ ९३ ॥
पूजाऽपि जापिभिस्तुल्या विप्रदैवज्ञशिल्पिनाम् ।
वज्रार्ककान्तनीपानि नीलमुक्ताफलानि च ॥ ९४ ॥
पुष्यपद्मादिरागं च वैडूर्यं रत्नमण्टपम् ।
उशीरं माधवा क्रान्ता रक्तचन्दनकागरू ॥ ९५ ॥
श्रीकण्ठशारिबे कुन्दं[2] शङ्खिनीत्योषधीगणाः[3] ।
हेमताम्रमयो वङ्गं तारमारं सकांसकम् ॥ ९६ ॥
सीसकं चेति लोहानि हरितालं मनश्शिला ।
नीतोरिकामहेमाक्षीपारदो वह्निगैरिकम् ॥ ९७ ॥
गण्डकोग्रकमित्यष्टौ[4] यावन्तो व्रीहयः पुनः ।
गोधूमान् सतिलान् माषान् मुद्गानप्याहरेद्यवान् ॥ ९८ ॥
नीवारान् श्यामकानेवं व्रीहयोऽप्यष्ट कीर्तिताः ।
एवं पञ्चाष्टकाभावे पञ्चद्रव्याण्यथाऽऽहरेत् ॥ ९९ ॥

---

१. वाससः इति वाससं इति मातृकापाठः । २. कुन्दं कुण्डमिति मातृकापाठः । ३. शङ्खिनी शिखिनीति मातृकापाठः । ४. कोग्रकमिति मातृकापाठः ।

आचार्यस्य मखालयप्रवेशविधिः ।

स्नात्वा नित्यद्वयं कृत्वा प्रणवार्घ्यकरो गुरुः ।
सहायैर्मूर्तिपैर्विप्रैस्सह गच्छेन्मखालयम् ॥ १०० ॥

द्वारपूजा ।

[1]शान्त्यादितोरणांस्तत्र पूर्वादिक्रमतो यजेत् ।
स्वदक्षिणक्रमादेषां शाखयोर्द्वारपालकान् ॥ १०१ ॥
प्राच्यां नन्दिमहाकालौ याम्ये भृङ्गिविनायकौ ।
वारुण्यां वृषभस्कन्दौ देवीचण्डौ तथोत्तरे ॥ १०२ ॥
तच्छाखामूलदेशस्थौ [2]प्रशान्तशिशिरौ घटौ ।
पर्जन्या(घोर)शोकनामानौ भूतसञ्जीवनामृतौ ॥१०३॥
धनदश्रीप्रदौ द्वौ द्वौ पूजयेदनुपूर्वशः ।
स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोऽन्तकैः ॥ १०४ ॥
लोकग्रहवसुद्वन्द्वस्र[3]वन्तीनां द्वयं द्वयम् ।
भानुत्रयं युगं वेदो लक्ष्मीगणपतिस्तथा ॥ १०५ ॥
इति देवा मखागारे तिष्ठन्ति प्रतितोरणम् ।
विघ्नसङ्घापनोदाय कृतोस्संरक्षणाय च ॥ १०६ ॥
वज्रं शक्तिं तथा दण्डं खड्गपाशध्वजान् गदाम् ।
त्रिशूलं चक्रमम्भोजं पताका[4]स्वर्चयेत्क्रमात् ॥ १०७॥

---

१. एतेषां तोरणानां पूजापद्धतिः शिवलिङ्गप्रतिष्ठाविधौ विद्यते। विस्तरभयान्नेह प्रतन्यते । २. प्रशान्तेति तच्छाखामूलेत्यादिना कारणे स्पष्टम् । ३. गङ्गादीनामित्यर्थः । ४. पताकास्विति तथा च कारणे 'पूर्वादिदिक्पताका(दि)सु पूजयेत्तु दशायुधम्' । इति ।

हुंफट् वज्राय हुंफट् नमः इत्यादिमन्त्राः।

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः।
[1]शङ्कुकर्णस्तथा शर्वनेत्रस्सुमुखसंज्ञकः॥ १०८॥

सुप्रातिष्ठितनामा च ध्वजानामष्टदेवताः।
पूजा पूर्वादिकाष्ठासु भूतकोटिभिरावृताः॥ १०९॥

ओं कौं कुमुदाय नमः इत्यादिमन्त्रकैः।

अष्टदिक्षु अष्टभैरवपूजा।

[2]हेतुघ्नं त्रिपुरघ्नं च वह्न्यास्यं यमजिह्वकम्।
काळं कराळकं षष्ठमेकाङ्घ्रिं भीममष्टकम्॥ ११०॥

तथैव पूजयेद्दिक्षु क्षेत्रपालाननुक्रमात्।
बलिभिः कुसुमैर्धूपैस्सन्तुष्टान् परिभावयेत्॥ १११॥

कम्पादिपूजाक्रमः।

[3]कम्पे तृणेषु बन्धेषु वंशे स्थूणास्वनुक्रमात्।
पञ्च क्षित्यादितत्त्वानि सद्योजातादिभिर्यजेत्॥ ११२॥

---

१. शङ्कुकर्ण इति "शङ्खकर्णस्तथा शर्वस्त्रिणेत्रस्सम्प्रतिष्ठितः" इति कारणे। २. कारणे "हेतुघ्नं त्रिपुरघ्नं च वेताळं चाग्निजिह्वकम्। काळं कराळिनं भीममेकपादं तथैव च॥ पूर्वादीशानपर्यन्तं पूजयेत्तु यथाक्रमम्" इति विद्यते। ३. कम्पे इति तथैव कारणे "यागमण्टपकम्पेषु पृथिवीतत्त्वकं यजेत्। तृणेषु जलतत्त्वं च बन्धेषु चाग्नितत्त्वकम्॥ वंशेषु वायुतत्त्वं च स्थूणासु गगनं यजेत्" इति विद्यते। कप्यातृणेषु इति मातृकापाठः।

सदाशिवपदं व्यापि मण्टपं धाम शाङ्करम् ।
पताकाशक्तिसंयुक्तं तत्त्वदृष्ट्याऽवलोकयन् ॥ ११३ ॥

दिव्यान्तरिक्षभूमिष्ठान् विघ्नानुत्सार्य पूर्ववत् ।
प्रविशेत्पश्चिमद्वारा शेषद्वाराणि घट्टयेन् ॥ ११४ ॥

भूतशुद्ध्यादिविधिः ।

प्रदक्षिणक्रमाद्गत्वा निविष्टो वेदिदक्षिणे ।
उत्तराभिमुखीकुर्याद्भूतशुद्धिं यथा पुरा ॥ ११५ ॥

अन्तर्यागं विशेषार्घ्यं कृत्वा द्रव्यादिशोधनम् ।
कुर्वीत स्वात्मनः पूजां शेषकर्माणि पूर्ववत् ॥ ११६ ॥

साधारं सकलं स्वस्मिन् विन्यसेत्तदनन्तरम् ।
विशेषाच्छिव(तत्त्वा)हस्ताय तत्त्वत्रयमनुक्रमात् ॥
॥ ११७ ॥

ललाटकण्ठपादान्तं शिवविद्यात्मकं परम् ।
रुद्रनारायणब्रह्मदैवतं निजशम्बरैः ॥ ११८ ॥

हूं हीं हां मूर्तीस्तदीश्वरांस्तत्र पूर्ववद्विनिवेशयेत् ।
तद्व्यापकं शिवं साङ्गं शिवहस्तं च मूर्धनि ॥ ११९ ॥

---

१. सदेति सदाशिवपदव्याप्तिकं मण्टपं विचिन्त्येत्यर्थः । २. घट्टयन् पिदधानः तथा च सिद्धान्तशेखरे प्रोक्तं "प्रविश्य पश्चिमद्वारं पिदध्याद-पराणि च" इति ।

ब्रह्मरन्ध्रप्रविष्टेन तेजसा बाह्यमान्तरम् ।
तमःपटलमाधूय प्रद्योतितदिगन्तरम् ॥ १२० ॥

आत्मानं मूर्तिपैस्सार्धं स्रग्वस्त्रमकुटादिभिः ।
भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत् ॥

चतुष्पथान्तसंस्कारैस्संस्कुर्यान्मखमण्टपम् ।
विक्षिप्य विकिरादीनि कुशकूर्च्योपसंहरेत् ॥ १२२ ॥

यागमण्टपस्थदेवतापूजा ।

आसनीकृत्य वर्धन्या वास्त्वादीन् पूर्ववद्यजेत् ।
शिवकुम्भास्त्रवर्धन्यौ पूजयेच्च चलासने ॥ १२३ ॥

---

१. मकुटेति सिद्धान्तशेखरे मूर्तिधराणां मकुटालङ्करणं निरस्तम् । अन्यान्याभरणानि चोक्तानि "अलङ्कुर्यादथात्मानं गुरुर्मूर्तिधरैस्सह । भूषणैर्मकुटोपेतैर्मूर्तिपा मकुटैर्विना ।। पट्टकुण्डलकेयूरमुद्रिकाकङ्कणादिभिः । सौवर्णैर्यज्ञसूत्रैश्च नानारत्नविचित्रितैः ।। पट्टादिशुभवस्त्रैश्च सोष्णीषैरुत्तरीयकैः । रुद्राक्षैर्यज्ञसूत्रैश्च पवित्रैर्हेमनिर्मितैः ॥ अलङ्कृत्यैवमात्मानम्" इति । २. चतुष्पथेति निरीक्षणादिचतुष्पथान्तसंस्कारैरित्यर्थः । ३. वास्त्वादीनिति नैर्ऋते वास्तुब्रह्माणं, ओं हां ब्रह्मासनाय नमः, ओं हां ब्रह्ममूर्तये नमः, इत्यासनमूर्तिभ्यां सम्पूज्य हंसस्थं तुन्दिलं गौरं सश्मश्रुचतुराननम् । दधानं दक्षिणे वामे दण्डाक्षस्रक्कमण्डलून् । ओं हां वास्त्वधिपतये ब्रह्मणे नमः इत्यावाहनादिना सम्पूज्य एवमेव महालक्ष्म्यादिकमर्चयेत् । ४. शिवकुम्भेति ऐशान्यां स्थण्डिले अष्टदळपद्मं विलिख्य तन्मध्ये गलिताम्भसा पूर्णौ स्वर्णरत्नौषधिलोहादिगर्भौ शिवकुम्भास्त्रवर्धन्यौ तिलादिसप्तधान्योपरि न्यस्य आधारशक्त्यादिक्रमेण चलासनपूजां कुर्यात् इति भावः ।

स्वदिक्षु कलशारूढाल्लोँकपालाननुक्रमात् ।
यानायुधादिसंयुक्तान् पूजयेद्विधिना यथा ॥ १२४ ॥
ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् ।
सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥ १२५ ॥
सप्तार्चिषञ्च बिभ्राणं अक्षमालां कमण्डलुम् ।
ज्वालामालाकुलं रक्तं शक्तिहस्तं छगासनम् ॥ १२६ ॥
कृतान्तं महिषारूढं दण्डहस्तं भयानकम् ।
कालपाशधरं कालं ध्यायेद्दक्षिणदिग्पतिम् ॥ १२७ ॥
रक्तनेत्रं शवारूढं नीलोत्पलदळप्रभम् ।
कृपाणपाणिमस्रौघं पिबन्तं राक्षसेश्वरम् ॥ १२८ ॥
नागपाशधरं हृष्टं रत्नौघद्युतिविग्रहम् ।
शशाङ्कधवळं ध्यायेद्वरुणं मकरासनम् ॥ १२९ ॥
आपीनं हरितच्छायं विलोलध्वजधारिणम् ।
प्राणभूतं च भूतानां हरिणस्थं समीरणम् ॥ १३० ॥
कुबेरं मनुजासीनं सर्वगं खर्वविग्रहम् ।
स्वर्णच्छायं गदाहस्तं उत्तराशापतिं स्मरेत् ॥ १३१ ॥

---

१. ऐरावतेति ओं हां इन्द्रासनाय नमः, ओं हां इन्द्रमूर्तये नमः इत्यासनमूर्तिमन्त्राभ्यां सम्पूज्य अनन्तरं ऐरावतगजारूढं इति श्लोकेन ध्यात्वा ओं हां इन्द्राय नमः इति मूलमन्त्रेण आवाहनाद्युपचारान् कुर्यात् । एवमेवेतरेषामपि ।

ईशानं वृषभारूढं त्रिशूलव्याळधारिणम् ।
शरच्चन्द्रावदाताभं चन्द्रमौलिं त्रिलोचनम् ॥ १३२ ॥

अनन्तं पुण्डरीकाक्षं फणादशशतैर्युतम् ।
विद्युद्दामप्रतीकाशं कूर्मारूढं कृताञ्जलिम् ॥ १३३ ॥

पीतं पीनं चतुर्बाहुं ब्रह्माणं चतुराननम् ।
हंसयानं च बिभ्राणं दण्डाक्षस्रक्कमण्डलुम् ॥ १३४ ॥

स्तम्भमूलस्थकुम्भेषु वेद्यां धर्मादिकान् यजेत् ।
दिक्षु कुम्भेष्वनन्तादीन् पूजयन्त्यपि केच[1]न ॥ १३५ ॥

शिवाज्ञां श्रावयेत्कुम्भं भ्रामयेदाळुपृष्ठकम् ।
पूर्ववत्स्थापयेदादौ कुम्भं तदनु वर्धनीम् ॥ १३६ ॥

शिवं स्थिरासनं कुम्भे शस्त्राद्यं च ध्रुवासनम् ।
पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ १३७ ॥

निजयागं जगन्नाथ रक्ष भक्तानुकम्पया ।
इति संश्राव्य रक्षार्थं कुम्भे खड्गं निवे[2]दयेत् ॥ १३८ ॥

---

१. केचनेति विघ्नेशानर्चयेद्वेद्यां कुम्भेष्विन्द्रादितः क्रमादिति सिद्धान्तशेखरकृत् । २. निवेदयेदिति "यज्ञस्यास्य पतिस्त्वं हि मूर्तिरेषा तवाचला । एष ते ज्ञाननिस्त्रिंशस्तद्गृहाण स्वमायुधम्" इति प्रार्थ्य ज्ञानासिं समर्पयेदिति भावः ।

31

दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथवा ।
कुम्भे एवं यजेदीशमित्युक्तं पिङ्गलामते ॥ १३९ ॥

मण्डलमार्गप्रदर्शनम् ।

अथ मण्डलमार्गोऽपि मनागुद्दिश्यते यथा ।
तन्मध्येऽष्टदळं पद्मं तस्यांशे[1] कर्णिकाऽऽदिमे ॥ १४० ॥

केसराणि द्वितीये स्युस्तृतीये दळसन्धयः ।
चतुर्थे तु दळाग्राणि कर्णिकाष्टाभिरङ्गुलैः ॥ १४१ ॥

पद्मपत्रदळाग्राणि गात्राणि दळसन्धयः ।
चतुरङ्गुलकाः कार्या यथाशोभं यथाक्रमम् ॥ १४२ ॥

दळाग्रादङ्गुलं त्यक्त्वा प्रतिवारणमण्डलम् ।
समन्तादङ्गुलेनेति विधातव्यं विचक्षणैः ॥ १४३ ॥

आसनं देवदेवस्य वीथ्यादिसहितं क्वचित् ।
वीथिका[2]द्वारमब्जेन तदर्धेनास्य वा क्वचित् ॥ १४४ ॥

---

१. तस्यांशे इति तथोक्तं किरणे "पद्मं कृत्वा चतुर्धा तु प्रागंशे कर्णिकां लिखेत् । द्वितीये केसराण्यंशे तृतीये स्याद्दळाष्टकम् ॥ चतुर्थे तु दळाग्राणि बाह्यं तत्परिवारिणा" इति । २. वीथिकाद्वारमिति "चतुर्भिः कमलं भागैर्वीथिका तत्समा भवेत् । वीथ्यर्धेन पृथक्कार्यं देवतावरणं बहिः" इति किरणोक्तेः वीथिकाद्वारमब्जेन कमलेन तुल्यं स्थातव्यमिति भावः ।

द्वारमानं भवेच्छोभा[1] तदर्धेन कपोलकम्[2] ।
श्वेतं[3] रजस्ततः कृष्णं क्षिपेत्पीतं विधानतः ॥ १४५ ॥
केसराणि दळाग्राणि दळानि गात्रकानि च ।
कुर्वन्ति त्र्यङ्गुलान्यन्ये कर्णिकां च षडङ्गुलाम् ॥१४६॥
तत्र सम्पूज्य देवेशं व्रजेयुः कुण्डसन्निधिम् ।
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्तिधारिणः ॥ १४७ ॥
गुरोरादेशतः कुर्युर्निजकुण्डेषु संस्कृतिम् ।

यागमण्टपे वेदपारायणविधिः ।

जपेयुर्जापिनोऽसङ्ख्यमस्त्रं[4] मध्येतु संहिताम् ॥ १४८ ॥

---

१. शोभेति शोभाख्यमण्डलावयवविशेषः द्वारमानं भवेदित्यर्थः । २. कपोलकमिति कपोलकमिति मण्डलावयवविशेषः । तथोक्तं किरणे "द्वाराणि पद्ममानानि तदङ्गेनैव वर्तयेत् । एकभागसमं कण्ठं कपोलं वर्तयेत्तथा ॥ उपकण्ठं तथावर्त्य शेषं शोभेति गीयते" इति । ३. श्वेतमिति तथोक्तं किरणे "कृत्वा तद्वर्तयित्वैवं रजांसि विनिपातयेत् । यवगोधूमजैश्चूर्णैश्शालितण्डुलजैस्सितम् ॥ धातुसिन्दूरजं रक्तं मृद्भिः पक्वेष्टकं भवेत् । कृष्णं रजस्तुषैर्दग्धरङ्गारैर्वा सुचूर्णितम् ॥ हरिद्रासम्भव पीतं गैरिकोद्भवमेव वा । हरितं चूर्णितैः पत्रैर्हरितैस्तत्प्रकल्पयेत् ॥ रजः कार्यं यथा प्रोक्तं यथासम्भवतोऽपि वा । कर्णिकां पीतिकां कुर्यात्सिता वापीह बीजिका ॥ केसराणि विचित्राणि मूलमध्याग्रदेशतः । श्वेतरक्तानि पीतानि क्रमात् कृत्वाऽरुणानि वा ॥ दळाष्टकं सितं कार्यमरुणं वा प्रकल्पयेत्" । ४. अस्त्रमिति अग्निकोणे शिवास्त्रं निरृतौ पाशुपतास्त्रं वायव्ये क्षुरिकास्त्रं ईशाने अघोरास्त्रं च चत्वारश्शिवदीक्षिताः जपेयुरिति भावः ।

पठेयुर्ब्राह्मणाश्शान्तिं स्वशाखावेदपारगाः ।
श्रीसूक्तं पावमानीं च मैत्रकं च वृषाकपिम् ॥ १४९ ॥

ऋग्वेदी पूर्वदिग्भागे सर्वमेतत्समुद्धरेत् ।
देवव्रतं च भारुण्डं ज्येष्ठसाम रथन्तरम् ॥ १५० ॥

पुरुषङ्गतिमेतानि[1] सामवेदी तु दक्षिणे ।
रुद्रं पुरुषसूक्तं च श्लोकाध्यायं विशेषतः ॥ १५१ ॥

ब्राह्मणञ्च यजुर्वेदी पश्चिमायां समुद्धरेत् ।
नीलरुद्रमथर्वाणं स्कन्दसूक्तं[2] तथैव च ॥ १५२ ॥

उत्तरे[3]ऽथर्वशीर्षं च तत्परस्तं समुद्धरेत् ।

होमविधिः ।

आचार्यस्त्वग्निमुत्पाद्य प्रतिकुण्डं प्रपातयेत् ॥ १५३ ॥

वह्नेः पूर्वादिकाद्भागात्पूर्वकुण्डादितः क्रमात् ।
धूपदीपचरूणां च कृते वह्निं समुद्धरेत् ॥ १५४ ॥

पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ।
देशकालादिसम्पत्तौ दुर्निमित्तप्रशान्तये ॥ १५५ ॥

---

१. सिद्धान्तशेखरेऽपि पुरुषङ्गतिमिति वर्तते । २. स्कन्देति सूर्यसूक्तं पठेदिति सिद्धान्तशेखरकृत् । ३. उत्तरे इति "ऋग्वेदी पूर्वदिग्भागे यजुर्वेदी तु दक्षिणे । पश्चिमे सामवेदी च सौम्ये वाऽथर्वविन्मतः" इत्यादि च तत्रैवोक्तम् ।

होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्वा शुभावहम्।
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेशयेत् ॥ १५६॥

पूर्वोक्ताभरणाद्यैश्च यजमानेन पूजिताः।

स्नानमण्टपे देवस्य करणीयविधिः।

प्रहृष्टमनसस्सर्वे व्रजेयुस्स्नानमण्टपम् ॥ १५७॥

भद्रपीठे सपद्माङ्के प्राग्वेद्यां प्रणवासने।
सन्निधायात्र देवेशं ताडयित्वाऽवकुण्ठयेत् ॥ १५८॥

स्नापयेत्पूजयित्वा तु मृदा काषायवारिणा।
गोमूत्रैर्गोमयेनापि वारिणा चान्तरान्तरा ॥ १५९॥

भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा।
देशिको मूर्तिपैस्सार्धं कृत्वा चाकारशोधनम् ॥ १६०॥

वर्मजप्तेन संच्छाद्य पीतवर्णेन वाससा।
सम्पूज्य सितपुष्पैस्तु नयेदुत्तरवेदिकाम् ॥ १६१॥

लक्षणोद्धारविधिः।

तत्र दत्तासनायां तु शय्यायां सन्निवेश्य च।
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् ॥ १६२॥

शलाकया सुवर्णस्य शास्त्रदृष्टेन कर्मणा।
कृतकर्मा च शास्त्रेण लक्ष्मीं शिल्पी समुत्किरेत् ॥

त्रिंशादथोऽथवा पादादर्चाया अर्धतोऽथवा।
सर्वकामप्रसिद्ध्यर्थं शुभं लक्ष्मावतारणम् ॥ १६४॥

लिङ्गदैर्घ्यविकारांशे त्रिभक्ते भगवर्जनात् ।
विस्तारो लक्ष्म देहस्य भवेल्लिङ्गेषु सर्वतः ॥ १६५ ॥

यवस्य नवभक्तस्य भागैरष्टभिराहृता ।
हास्तिके लक्ष्मरेखा च गाम्भीर्याद्विस्तरादपि ॥ १६६ ॥

एवमष्टांशवृद्ध्या तु लिङ्गेषु द्विकरादिषु ।
भवत्यष्टयवा पृथ्वी गम्भीरा नवहास्तिके ॥ १६७ ॥

सान्तरेषु[1] च लिङ्गेषु पादवृद्धेषु स(द्य)र्वतः ।
लक्ष्मदेहस्य(विम्भोग) भवे(द्यय) द्वियववर्धनात् ॥

गम्भीरत्वपृथुत्वाभ्यां रेखापि द्व्यंशवृद्धितः ।
स(द्ये)र्वेषु च भवेल्लक्ष्म लिङ्गमस्तकमस्तकम् ॥१६९॥

लक्ष्मदेहेऽष्टधा भक्ते मूर्ध्नि भागद्वये च्युते ।
षड्भागपरिवृत्तेन मुक्त्वा भागद्वयं द्विधा ॥ १७० ॥

रेखाक्रमेण सम्बन्धं कारयेत्पृष्ठदेशतः ।
बहुविधोऽयमन्यत्र सकृदत्रोपदर्शितः ॥ १७१ ॥

रत्न(जैर्ले)जेलक्षणोद्धारो न लोहे न सरिद्भवे ।
ऐशानचलयोगेषु न दृष्टं क्वचिदागमे ॥ १७२ ॥

स्वरूपलक्षणं तेषां प्रभा रत्नेषु निर्मिता ।
नयनोन्मीलनं व्यक्ते सान्निधानाय लक्ष्म तत् ॥१७३॥

---

1. सान्तशेषु इति मातृकापाठः ।

लक्षणोद्धारानन्तरकरणीयविधिः ।

लक्षणोद्धाररेखां च घृतेन मधुना तथा ।
मृत्युञ्जयेन सम्पूर्य शिल्पिदोषनिवृत्तये ॥ १७४ ॥

अर्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः ।
मुद्रिकापात्रशय्याभिर्वासोभिश्च शलाकया ॥ १७५ ॥

शिल्पिनं तोषयित्वा तु दत्वा गां गुरवे शुभाम् ।
समभ्यर्च्य ततो लिङ्गं धूपदूर्वाक्षतादिभिः ॥ १७६ ॥

गायन्त्यो मङ्गलं नार्यो जीवपुत्रास्सभर्तृकाः ।
सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ १७७ ॥

स्पृष्ट्वा च रोचनां दत्वा कुर्यान्निर्मर्चनादिकम् ।
गुडलवणधान्याक्षदानेन विसृजेत्ततः ॥ १७८ ॥

गुरुर्मूर्तिधरैस्सार्धं हृदा वा प्रणवेन वा ।
मृत्स्नागोमयगोमूत्रभस्मभिस्सलिलान्तरम् ॥ १७९ ॥

स्नापयेत्पञ्चगव्येन पञ्चामृतपुरस्सरम् ।
विरूक्षणं कषायैश्च सर्वौषधिजलेन च ॥ १८० ॥

शुभपुष्पफलस्वर्णरत्नशृङ्गासनो(दितैः) दकैः ।
तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ १८१ ॥

तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा ।
क्षारार्णवादिभिः कुम्भैश्शिवकुम्भजलेन च ॥ १८२ ॥

विरूक्षणं विलेपं च सुगन्धैश्चन्दनादिभिः ।
सम्पूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥ १८३ ॥
बहुरूपेण नीराज्य रक्षातिलकपूर्वकम् ।

पश्चिममण्टपगमनविधिः ।

गीतवाद्यप्रनृत्तैश्च ब्रह्मघोषैश्च मङ्गळैः ॥ १८४ ॥
नीरक्षीरकुशाग्रादिद्रव्यैरर्घ्याय सूचितैः ।
जयस्तुत्यादिभिस्सार्धं रथमार्गानुगामिभिः ॥ १८५ ॥
हिरण्यकांस्यवासांसि सप्तव्रीहिकपर्दकान् ।
कुसुमानि सुगन्धीनि गेयवादित्रमङ्गलैः ॥ १८६ ॥
क्षिपेद्वित्तानुसारेण परिभ्राम्य नयेत्ततः ।

शयनविधिः ।

पश्चिमं मण्टपद्वारं तत्र रुद्रासनस्थितम् ॥ १८७ ॥
हृदा सम्पूज्य देवेशं कृते स्वस्त्ययने सति ।
प्रविश्य वेदिकामध्ये खट्वायां पट्टकेऽथवा ॥ १८८ ॥
विन्यस्य तुलिके तत्र सोपधाने ध्रुवेण तु ।
शक्त्यादिशक्तिपर्यन्ते विन्यसेदासने शुभे ॥ १८९ ॥
प्रासादे पश्चिमास्ये च मध्यात्पूर्वाश्रितं शिवम् ।
पश्चिमे पिण्डिकां तस्य न्यसेद्ब्रह्मशिलां तथा ॥ १९० ॥

पूर्वास्ये च भवेत्तस्मिन् सर्वमेतद्विपर्ययात्[1] ।
शस्त्रमन्त्रशतं लब्ध्वा निद्राकुम्भं ध्रुवासने ॥ १९१॥
प्रकल्प्य शिवकोणे च तत्त्वार्घ्यं हृदयेन तु ।
उत्थाप्योत्थासने लिङ्गं शिरसा पूर्वमस्तकम् ॥ १९२ ॥
समारोप्य न्यसेत्तस्मिन् सृष्ट्या ब्रह्मादि चन्दनम् ।
दद्याद्धूपं च सम्पूज्य तथा वासांसि वर्मणा ॥ १९३ ॥
नैवेद्यं च यथोद्दिष्टं ग्रहोपकरणादि यत् ।
पतद्ग्रहादि तत्सर्वं हृदा दद्यात्स्वशक्तितः ॥ १९४ ॥
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके ।
देशिकस्स्वस्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयम् ॥ १९५ ॥
शक्त्यादिभूमिपर्यन्तं स्वतत्त्वाधिपसंयुतम् ।
विन्यस्य[2] पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ १९६ ॥
मायासदेशतुर्याश्रा अष्टाश्रा वाऽथ वर्तुळम् ।
तत्राणुतत्त्वं विद्याख्यं शिवं सृष्टिक्रमेण च ॥ १९७ ॥
एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् ।

---

१. विपर्ययादिति सिद्धान्तशेखरे विपर्ययक्रमः प्रोक्तः । मृगेन्द्रपद्धतिव्याख्यानपर्यालोचनायां मातृकायां "सर्वमेतद्विपर्यया"दित्येतदनन्तरं "इत्थमुक्तासने लिङ्गं शिरसा पूर्वमस्तकम्" इत्येतदधिकतया वर्तितव्यमिति भाति । २. विन्यस्येति लिङ्गपीठब्रह्मशिलादिषु इति भावः ।

32

नवकुण्डपक्षे मूर्तिमूर्तीश्वरन्यासः ।

विन्यस्य मूर्तिमूर्तीशान् पूर्वादिक्रमतो यथा ॥ १९८ ॥
क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् ।
आकाशं मूर्तिरूपांस्तान् न्यसेत्तदधिनायकान् ॥१९९॥
शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् ।
महादेवं च भीमं च मन्त्रास्तद्वाचका इमे ॥ २०० ॥
लरशष(यवा)पयास्सश्च हकारश्च त्रिमात्रकाः ।
प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथवा क्वचित् ॥ २०१ ॥

पञ्चकुण्डपक्षे मूर्तिमूर्तीश्वरन्यासः ।

पञ्चकुण्डात्मके यागे मूर्तीः पञ्च धवान् न्यसेत् ।
पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ २०२ ॥
क्रमात्तदधिपांश्चात्र ब्रह्माणं धरणीधरम्[1] ।
रुद्रमीशं सदाख्यं च सृष्टिन्यासेन मन्त्रवित् ॥२०३॥
मुमुक्षोर्वा निवृत्त्याद्या अजाताद्यास्तदीश्वराः ।
त्रितत्त्वं वाथ सर्वत्र न्यसेद्ध्याप्त्या[2] स्वकारणम् ॥२०४॥

---

१. धरणीधरं विष्णुम् । २. व्याप्त्येति सिद्धान्तशेखरे व्याप्तिक्रमः प्रोक्तः । "महादेवं च भीमं च न्यसेल्लिङ्गे यथाक्रमम् । मूर्तिमूर्तीशतत्त्वानां ज्ञात्वा व्याप्तिं च विन्यसेत् ॥ आत्मतत्त्वं तु मायान्तं विद्यातत्त्वं तदन्तकम् । शिवतत्त्वं शिवान्तं च त्रितत्त्वव्याप्तिरीदृशी ॥ पञ्चानां क्ष्मादितत्त्वानां तत्तत्तत्त्वात्मका मता । व्याप्तिस्सूर्यस्य चन्द्रस्य शब्दार्थे सङ्गता मता ॥ धरादिपुरुषप्रान्ता यजमानस्य कीर्तिता"इति दिक् ।

शुद्धे चाध्वनि विद्येशाः अशुद्धे लोकनायकाः।
द्रष्टव्या मूर्तिपार्श्वैते भोगिनो मन्त्रनायकाः ॥२०५॥
पञ्चत्रिंशत्तथैवाष्टौ पञ्चत्रीणि यथाक्रमम्।
एषां तत्त्वं तदीशानं मन्त्रा दिङ्मात्रतो यथा ॥२०६॥

ओं हां शक्तितत्त्वाय नमः। ओं हां शक्तितत्त्वाधिपाय शक्तिमते नम इत्यादि। ओं हां क्ष्मामूर्तये नमः। ओं हां क्ष्मामूर्त्यधिपाय शर्वाय नमः। इत्यादि। ओं हां पृथिवीमूर्तये नमः। ओं हां पृथिवीमूर्त्यधिपाय ब्रह्मणे नमः। इत्यादि। ओं हां शिवतत्त्वाय नमः। ओं हां शिवतत्त्वाधिपाय रुद्राय नमः। इत्यादि।

## जीवन्यासक्रमः।

नाभिकन्दात्समुच्चार्य घण्टानादविसर्पिणम्।
ब्रह्मादिकारणत्यागात् द्वादशान्ते समाश्रितम् ॥२०७॥
मन्त्रं च मनसा[1]ऽभिन्नं प्राप्तानन्दरसोद्गमम्।
द्वादशान्तात्समानीय निष्कळं व्यापकं शिवम् ॥
अष्टात्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम्।
सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत्[2] ॥२०९॥

---

१. मनसेति मनोलयान्वितमित्यर्थः। २. निवेशयेदिति स्वाञ्जलिमध्यस्थमिति शेषः। अथ अर्घ्याद्यैस्सन्निधानादिकं च कुर्यात्।

जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः ।

पिण्डिकादिष्वभिषेकाद्युपचारविधिः ।

पिण्डिकादिषु विन्यासः प्रोच्यते साम्प्रतं यथा ॥२१०॥

पिण्डिकां च कृतस्नातां विलिप्तां चन्दनादिभिः ।
सद्वस्त्रैश्च समाच्छाद्य रन्ध्रे च भगलक्षणे ॥ २११ ॥

पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरसंस्थिताम् ।
लिङ्गवत्कृतविन्यासां विधिवत्सम्प्रपूजयेत् ॥ २१२ ॥

कृतस्नानादिकां तद्वल्लिङ्गमूले शिलां न्यसेत् ।
कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥ २१३ ॥

प्रणवपूर्वं दूं सूं ह्रीं मध्यादन्यतमेन च ।
क्रियाशक्तिनिभां पिण्डीं शिलामाधाररूपिणीम् ॥

भस्मदर्भतिलैः कुर्यात्प्राकारत्रितयं ततः ।
रक्षायै लोकपालांश्च सायुधान् पूजयेद्बहिः ॥ २१५ ॥

ओं ह्रीं क्रियाशक्तये नमः । ओं ह्रीं संहारगौरि रुद्रदयिते स्वाहा इति वा पिण्डिकायाम् । ओं ह्रीं आधारशक्तये नमः । ओं हां वृषभाय नमः ।

धारिकादीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा ।
तथा धात्री च विह्वी च न्यसेद्वा पञ्च नायिकाः ॥

वामा ज्येष्ठा क्रिया ज्ञानी चेच्छा तिस्रोऽथवा न्यसेत् ।
क्रिया ज्ञानी तथेच्छात्र पूर्ववच्छान्तिमूर्तिषु ॥ २१७ ॥

तमा मोहा क्षया निष्ठा मृत्युर्माया भया ज्वरा ।
पञ्चाथवा तमा मोहा घोरा(तीरूप)...... ज्वरा ॥
तिस्रोऽथवा क्रिया ज्ञानी तथैवेच्छादिनायिकाः ।
आत्मादित्रिषु तत्त्वेषु तीव्रमूर्तिषु विन्यसेत् ॥ २१९ ॥
अत्रापि पिण्डिकाब्रह्मशिलादिषु यथाविधि ।
गौर्यादिशम्बरैरेव पूर्ववत्सर्वमाचरेत् ॥ २२० ॥
एवं विधाय विन्यासं

कुण्डेषु होमसमाचरणविधिः ।

गत्वा कुण्डान्तिकं ततः ।
कुण्डे मध्ये महेशानं मेखलासु[1] महेश्वरम् ॥ २२१ ॥
क्रियाशक्तिं तथा नाभौ नादमोष्ठेषु[2] विन्यसेत् ।
घटस्थण्डिलवह्नीशैर्नाडीसन्धानकं[3] ततः ॥ २२२ ॥
पद्मतन्तुसमां शक्तिमुद्गतेन समुद्गताम् ।
विशन्तीं शून्यमार्गेण निस्सरन्तीं समुद्गमात् ॥ २२३ ॥

---

१. मेखलासु इति "मेखलासु त्रितत्त्वानि कलाः पञ्चाऽपि विन्यसेत्" इति सिद्धान्तशेखरकृत् । २. नादमिति नादमोष्ठे भगे कलामिति सिद्धान्तशेखरकृत् । ३. नाडीति मूलेन रेचकन्यासनिर्गतां बिसतन्तुवत् । "अच्छिन्नाममृतार्द्रां च विशन्तीं कुम्भगां शिवं । नाडिकां ब्रह्मरन्ध्रेण शून्यमार्गेण निर्गताम् ॥ आत्मानं संविशन्तीं च स्मरेदेवं गुरूत्तमः । नाडीसन्धिमिति ख्यातं सर्वत्रैवं समाचरेत् ॥ स्थण्डिलस्थेऽग्निसंस्थे च मूर्तिपेष्वपि सद्गुरु"रिति सिद्धान्तशेखरकृत् ।

पुनश्च शून्यमार्गेण विशन्तीं स्वस्य चिन्तयेत् ।
एवं सर्वत्र सन्धेयं मूर्तिपैश्च परस्परम् ॥ २२४ ॥

सम्पूज्य धारिकां शक्तिं कुण्डे सन्तर्प्य च क्रमात् ।
तत्त्वतत्त्वेश्वरान् मूर्तिमूर्तीशांश्च घृतादिभिः ॥ २२५ ॥

सम्पूज्य तर्पयित्वा तु सन्निधौ[1] संहिताणुभिः ।
शतं सहस्रमर्धं वा पूर्णया सह होमयेत् ॥ २२६ ॥

तत्त्वतत्त्वेश्वरान् मूर्तिमूर्तीशांश्च स्वकान् स्वकान् ।
तथा सन्तर्प्य सान्निध्ये जुहुयुर्मूर्तिपा अपि ॥ २२७ ॥

ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः ।

लिङ्गसंशोधनविधिः ।

सन्तर्प्य शान्तिकुम्भाम्भः प्रोक्षितं कुशमूलतः ॥२२८॥

लिङ्गमूलं च संस्पृश्य जपेयुर्होमसंख्यया ।
सन्निधानं हृदा कुर्युः वर्मणा रोधकुण्ठनम् ॥ २२९ ॥

एवं संशोध्य ब्रह्मांशं विष्ण्वंशादिविशुद्धये ।
विधाय पूर्ववत्[2]सर्वं होमसंख्याजपादिकम् ॥ २३० ॥

कुशमूलाग्रयोगेन लिङ्गमध्याग्रकं स्पृशेत् ।
यथा यथा च सन्धानं तदिदानीमिहोच्यते ॥ २३१ ॥

---

१. सन्निधौ देवतासन्निधानार्थमिति भावः । २. पूर्ववदिति सिद्धान्तशेखरे प्रतिभागं शोधनक्रमः स्पष्टं प्रत्यपादि ।

ओं ह्रां ह्रां वा ओं ओं वा ओं लूं लूं वा क्षमामूर्तये नमः। ओं ह्रां ह्रां वा ओं ओं वा ओं रूं वह्निमूर्तये नमः। एवं यजमानादिमूर्तिभिरभिसन्धेयम् ।

पञ्चमूर्त्यात्मकेप्येवं सन्धानं हृदयादिभिः ।

पीठादिसंशोधनविधिः ।

मूले स्वकीयबीजैर्वा ज्ञेयं तत्त्वत्रयात्मके ॥ २३२ ॥
शिलापिण्डिवृषेष्वेवं पूर्णाच्छिन्नं स्वशम्बरैः ।
भागं भागं विशुद्ध्यर्थं होमं[1] कुर्याच्छताधिकम् ॥ २३३ ॥
न्यूनादिदोषमोक्षार्थं शिवेनाष्टाधिकं शतम् ।
हुत्वाऽथ यत्कृतं कर्म शिवश्रोत्रे निवेदयेत्[2] ॥ २३४ ॥
एतत्समर्पितं कर्म त्वशक्त्यैव मया प्रभो ।
ओं नमो भगवते रुद्रे[3] रुद्र रौद्र नमोऽस्तु ते ॥ २३५ ॥
विधिपूर्णमपूर्णं वा स्वशक्त्याऽऽपूर्य गृह्यताम् ।
ओं ह्रीं शङ्करि पूरय पूरय स्वाहा इति पिण्डिकायाम् ।
अथ लिङ्गे न्यसेज्ज्ञानीं[4] क्रियाख्यां पीठविग्रहे ॥ २३६ ॥

---

१. होममिति "समिद्घृतचरून् लाजान् सक्तुसिद्धार्थकांस्तिलान् । अपूपं च यवान् शम्याः पत्रं शालीर्यथाक्रमात्" इत्युक्तैर्द्रव्यैरिति भावः ।
२. निवेदयेदिति एतत्समर्पितमित्युत्तरश्लोकप्रतिपाद्यमानक्रमेणेति भावः ।
३. रुद्रेति तुभ्यमिति सिद्धान्तशेखरपाठः । ४. ज्ञानीं ज्ञानशक्तिम् ।

आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि ।
निरुध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥ २३७ ॥

एकरात्रमथो वाऽपि यद्वा सद्योऽधिवासनम् ।
विनाऽधिवासनं यागः कृतो न च फलप्रदः ॥ २३८ ॥

स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम् ।
शिवकुम्भादिपूजां च दिग्बलिं[1] च निवेदयेत् ॥२३९॥

श्रीमत्सोमशिवेनायमधिवासविधिः कृतः ।
॥ २३९½—१५६८ ॥

इति श्रीक्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ
काम्यविधौ प्रतिष्ठाधिवासविधिस्सम्पूर्णः ।

---

१. दिग्बलिमिति । "ततः कुण्डाग्निदिग्भागे" इत्यारभ्य बलिविधानक्रमस्सिद्धान्तशेखरे सुस्पष्टं प्रत्यपादि ।

॥ श्रीः ॥

# शिवलिङ्गस्थापनाविधिः ।



प्रातर्नित्यविधिं[1] कृत्वा द्वारपाल[2]प्रपूजनम् ॥ १ ॥
प्रविश्य[3] प्राग्विधानेन देह[4]शुद्ध्यादिमाचरेत् ।
दिग्पतिं च समभ्यर्च्य शिवकुम्भं च वर्धनीम् ॥ २ ॥
अष्टपुष्पिकया लिङ्गं वह्निं सन्तर्प्य च क्रमात् ।

आधारब्रह्मशिलान्यासक्रमः ।

शिवा[5]ज्ञातस्ततो गच्छेत्प्रासादं[6] शस्त्रमुच्चरेत् ॥ ३ ॥
तद्गतान् प्रक्षिपेद्विघ्नान् हुम्फडन्तशराणुना ।
न मध्ये[7] स्थापयेल्लिङ्गं वेधदोषविशङ्कया ॥ ४ ॥

---

१. नित्यविधिं आह्निकद्वन्द्वम् । २. द्वारेति अस्त्रवास्तुनाथादीनामुपलक्षणम् । ३. प्रविश्य पश्चिमेन द्वारेणेति शेषः । ४. देहेति अत्रत्याऽऽदिपदात् स्थानशुद्धिविशेषार्घ्यद्रव्यमन्त्रशुद्धिपञ्चगव्यपञ्चामृतशिवहस्तकरणादिकं पूर्ववदाचरेदित्यर्थः । ५. शिवेति प्रतिष्ठार्थं शिवानुज्ञातः । ६. प्रासादं गर्भगेहम् । ७. न मध्ये इति "गर्भमध्यं विनिश्चित्य कोणसूत्रद्वयेन च । न मध्ये स्थापयेल्लिङ्गं गर्भगेहस्य देशिकः ॥ वेधादोषं परित्यज्य किञ्चिदीशानमाश्रयेत्" इति सिद्धान्तशेखरकृत् ।

तस्मान्मध्यं परित्यज्य यवार्धेन यवेन वा ।
किञ्चिदीशानमाश्रित्य शिलां मध्ये निवेशयेत् ॥ ५ ॥
मूलेन तामनन्ताख्यां सर्वाध्वा[1]धाररूपिणीम् ।
सर्वाङ्गां सृष्टियोगेन विन्यसेदचलां शिलाम् ॥ ६ ॥
अथानेन च मन्त्रेण शिवस्यासनरूपिणीम् ।
ओं नमो व्यापिनि स्थिरे अचले ध्रुवे ह्रीं लं ह्रीं स्वाहा ।
[2]त्वया शिवाज्ञया शक्ते स्थातव्यमिह सन्ततम् ॥ ७ ॥
इत्युक्त्वा च समभ्यर्च्य रुन्ध्याद्रोधनमुद्रया ।

### ब्रह्मशिलागर्तेषु वज्रादिद्रव्यनिक्षेपणविधिः ।

[3]वज्रादीनि च रत्नानि तथो[4]शीरादिकौषधीः ॥ ८ ॥
लो[5]हान् हेमादिकांस्तत्र हरि[6]ताळादिकांस्तदा ।
धा[7]न्यप्रभृतिसस्यांश्च पूर्वमुक्तानुक्रमात् ॥ ९ ॥

---

१. सर्वाध्वेति "सर्वाध्वाधाररूपां तामनन्ताख्यां च सर्वगाम्" इति सिद्धान्तशेखरकृत् । २. त्वयेति "त्वमेव परमा शक्तिस्त्वमेवासनधारिका । शिवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा ॥" इति सिद्धान्तशेखरकृत् । ३. वज्रादीनि चेति वज्रनीलमहानीलसूर्यकान्तमौक्तिकपुष्यरागपद्मरागवैडूर्याणि प्रभाशक्तिमयानीत्यर्थः । ४. तथोशीरेति उशीरविष्णुक्रान्तरक्तचन्दनकृष्णागरुश्रीखण्डशारिबाकुष्ठशङ्खपुष्पिकाः आरोग्यशक्तिमया ओषधयः । ५. लोहानिति हेमताम्रकृष्णलोहवङ्गरौप्यपित्तळाकांस्यसीसान् देहशक्तिमयानित्यर्थः । ६. हरिताळादिकानिति हरिताळमनश्शिलागैरिकस्वर्णमाक्षिकपारदाग्निगैरिकगन्धकाभ्रकान् वीर्यशक्तिमयान् । ७. धान्यप्रभृति इति व्रीहिगोधूमतिलमाषमुद्गयवनीवारश्यामाकान् दीप्तिशक्तिमयान् भावयन्निति भावः ।

प्रभारोग्यत्वदेहत्ववीर्यशक्तिमयानिमान् ।
भावयन्नेकचित्तस्तु लोकपालेशशम्बरैः ॥ १० ॥

पूर्वादिवसुगर्तेषु न्यसेदेकैकशः क्रमात् ।
हेमजं तारजं कूर्मं वृषं वा द्वारसम्मुखम् ॥ ११ ॥

सरित्तीरमृदा युक्तं पर्वताग्रमृदाऽपि वा ।
प्रक्षिपेन्मध्यगर्तायां यद्वा मेरुं सुवर्णकम् ॥ १२ ॥

मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ।
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् ॥ १३ ॥

सप्तबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् ।
सुवर्णं रजतं वापि सर्वलोहसमुद्भवम् ॥ १४ ॥

स्वर्णं कृसरसंयुक्तं पद्मं वाऽनन्ततो न्यसेत् ।
देवदेवस्य शक्त्यादिशक्तिपर्यन्तमासनम् ॥ १५ ॥

प्रकल्प्य पायसेनाथ[१] लिप्त्वा गुग्गुलुनाऽथवा ।
श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणा[२]ऽस्त्ररक्षितम् ॥ १६ ॥

दिग्पतिभ्यो बलिं दद्यात्समाचान्तस्सदेशिकः ।
शिवेन[३] च शिलासूत्रसङ्गदोषनिवृत्तये ॥ १७ ॥

---

१. पायसेनेति "ततो गुग्गुलुना गर्तं दृढेनाऽऽपूर्य यत्नतः । गव्यपूतपयःपक्वपायसेनाऽनुलेपयेत्" इति सिद्धान्तशेखरकृत् । २. तनुत्रेण वर्मजप्तेनेत्यर्थः । ३. शिवेन मूलाणुनेत्यर्थः । अस्योत्तरपादस्थशस्त्रेणवेत्यनेनाऽऽन्वयः ।

शस्त्रेण वा शतं सम्यक् जुहुयात्पूर्णया सह ।
एकैकाहुतिदानेन सन्तर्प्य वास्तुदेवताः ॥ १८ ॥

लिङ्गन्यासक्रमः ।

समुत्थाप्य हृदा देवमानयेन्मङ्गळादिभिः ।
गुरुर्देवाग्रतो गच्छेन्मूर्तिपैस्स्वदिशि स्थितैः ॥ १९ ॥
बन्धुभिस्सह धर्मी[1] च देवयानस्य पृष्ठतः ।
प्रासादादि परिभ्राम्य[2] भद्राख्ये द्वारसम्मुखम् ॥ २० ॥
लिङ्गं संस्थापयेद्दीर्घं प्रासादं सम्प्रवेशयेत् ।
द्वारेण[3] द्वारबन्धं च द्वारदेशेन तद्विना ॥ २१ ॥
द्वारबन्धे शिखाशून्ये तदूर्ध्वेनाथ तद्युते ।
वर्जयन् द्वारसंस्पर्शं द्वारेणैव महेश्वरम् ॥ २२ ॥
देवगृह[4]समारम्भे कोणेनाऽपि प्रवेशयेत् ।
अयमेव विधिर्ज्ञेयो व्यक्त[5]लिङ्गेऽपि सर्वतः ॥ २३ ॥
गृहे[6] प्रवेशनं द्वारा लोकैरपि समीहितम् ।
उपद्वारप्रवेशेन विदुर्गोऽत्र क्षयं यतः ॥ २४ ॥

---

१. धर्मी यजमानः । २. परिभ्राम्य प्रदक्षिणीकृत्य । ३. द्वारेणेति "अकृते द्वारबन्धे चेद्द्वारेणैव प्रवेशयेत् । द्वारबन्धे शिखाशून्ये द्वारेणैवेश्वरं गुरुः ॥ द्वारेशिखान्विते तस्मिन्नन्याश्शाखा निधाय च । तिर्यगूर्ध्वमधस्ताच्च शाखास्पर्शं विहृत्य च ॥ लिङ्गं प्रवेशयेत्" इति सिद्धान्तशेखरकृत् । ४. देवगृहेति प्रासादसमारम्भे । ५. व्यक्तलिङ्गे प्रतिमायाम् । ६. गृहे इति "मुखलिङ्गे च बाणादौ रत्नलिङ्गादिकेष्वपि । जना अपि प्रकुर्वन्ति द्वारा गेहप्रवेशनम्" इति सिद्धान्तशेखरकृत् ।

तत्कर्तुश्च विना शान्तिमतश्शान्तिं समाचरेत् ।
जीर्णादिदोषदुष्टस्योपद्वारेणैव निर्गमम् ॥ २५ ॥

अथ [1]पीठे च संस्थाप्य लिङ्गं द्वारस्य सम्मुखम् ।
तूर्यमङ्गळघोषैस्तु दूर्वाक्षतसमर्चितम् ॥ २६ ॥

समुत्तिष्ठ हृदेत्युक्त्वा महापाशुपतं पठन् ।
अपनीय [2]फलके श्वभ्रादेशिको मूर्तिपैस्सह ॥ २७ ॥

[3]यन्त्रस्थं धारयित्वा तु विलिप्तं कुङ्कुमादिभिः ।
√ शक्तिशक्तिमतोरैक्यं ध्यात्वाऽऽलम्भनरक्षितम् ॥ २८ ॥

लयान्तं मूलमुच्चार्य सृष्ट्या श्वभ्रे निवेशयेत् ।
त्र्यंशेन ब्रह्मभागस्य यद्वा त्र्यंशद्वयेन च ॥ २९ ॥

अर्धेन चाष्टमांशेन सर्वस्यार्धः[4] प्रवेशनम् ।
विधाय सीसकस्त्रीभिर्दीर्घाभिस्सुसमाहि(तः)तम् ॥३०॥

[5]श्वभ्रं वालुकयाऽऽपूर्य प्रब्रूयाच्च स्थिरो भवेत् ।
ततो लिङ्गे स्थिरीभूते ध्यात्वा सकळरूपिणम् ॥ ३१ ॥

मूलमुच्चार्य शक्त्यन्तं सृष्ट्या च निष्कळं न्यसेत् ।
स्थाप्यमानं यदा लिङ्गं यां यां दिशमुपाश्रयेत् ॥३२॥

---

१. पीठे भद्रपीठे । २. फलके इति फलके वाऽपनीयाशु इति सिद्धान्तशेखरकृत् । अपनीय खगमिति मातृका । ३. यन्त्रस्थं नाळिकेरादिरज्जुभिः सुयन्त्रितं धारयित्वेत्यर्थः । ४. अधः गर्ते । ५. श्वभ्रं ब्रह्मशिलावटम् ।

तत्तद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ।
शब्दोत्थाने च वक्रे च भ्रान्ते च स्फुटितेऽथवा ॥
जुहुयान्मूलमन्त्रेण बहुरूपेण वा शतम् ।
किञ्चान्येष्वपि दोषेषु शिवशान्तिं समाश्रयेत् ॥ ३४ ॥
उक्तं[1] न्यासविधिं लिङ्गे कुर्वन्नेव न दोषभाक् ।

पिण्डिकास्थापनविधिः ।

पीठं[2]बन्धमधः कृत्वा लक्षणस्पर्शलक्षणम् ॥ ३५ ॥

---

१. उक्तं इति लिङ्गे ब्रह्माङ्गन्यासं अष्टत्रिंशत्कलान्यासं तत्त्वतत्त्वेश्वर-मूर्तिमूर्तीश्वरन्यासं च कृत्वा मुद्राभिस्सह आवाहनादि कृत्वा पाद्यमाचमनं चार्घ्यं पुष्पं गन्धं च वाससी समर्पयेदिति सिद्धान्तशेखरकृत् । २. पीठेति नात्र मूलग्रन्थे पिण्डिकास्थापनाविधिस्सुस्पष्टमुक्तः । अतोऽत्र सिद्धान्तशेख-रोक्तिः प्रदर्श्यते । "दत्वा देवं च सम्प्रार्थ्य पिण्डिकास्थापनं प्रति । पीठं लिङ्गे (वत)द्बोध्यं श्वेतवस्त्रयुगान्वितम् ॥ पूजितं शक्तिमन्त्रेण रथे चारोप्य यत्नतः । हर्म्यं प्रदक्षिणीकृत्य लिङ्गवच्च प्रवेशयेत् ॥ पीठं सुयन्त्रितं कृत्वा गुरुर्मूर्तिधरैस्सह । विवाहप्रथिते लग्ने शक्तिमन्त्रं समुच्चरेत् ॥ लयान्तं सृष्टि-मार्गेण लिङ्गस्योपरि संस्थितम् । यथा क्षीरेण तोयस्य यथा वा देहदेहिनोः ॥ चन्द्रेण चन्द्रिकायाश्च यथैक्यं च प्रभेदतः । ज्ञानात्मकेन लिङ्गेन तथैक्यं संस्मरेद्गुरुः । क्रियात्मकस्य पीठस्य प्रतिष्ठाकालयोगतः । प्राङ्मुखे पश्चि-मास्ये वा पीठमानमुदग्रकम् ॥ दक्षास्ये वोदगास्ये वा लिङ्गे प्राग्दिग्गतं भवेत् । एवं नाळं विनिश्चित्य लिङ्गे पीठं निवेशयेत् ॥ पीठप्रवेशने लिङ्गे यदि दोषस्समुद्गतः । लिङ्गवत्तत्प्रशान्त्यर्थं पूर्ववज्जुहुयाद्गुरुः ॥ पीठबन्धं स्थिरं कुर्याल्लक्षणस्पर्शलक्षणम् । अचलं समसूत्रं च सर्वदिक्षु समं स्मृतम् ॥ सन्धिं लिङ्गस्य पीठस्य वालुकाभिः प्रपूर्य च । सूक्ष्माभिरष्टबन्धेन सुपक्वेन च बन्धयेत् ॥ सुस्निग्धं सुदृढं कुर्यात्तप्तायसशलाकया" इति ।

गौरीमन्त्रं लयं नीत्वा सृष्ट्या पिण्डीं च विन्यसेत् ।
सम्पूर्य पार्श्वसन्धी च वालुकावज्रलेपतः ॥ ३६ ॥

पिण्डिकैशानकोणे चण्डस्थापनक्रमः ।

ततो मूर्तिधरैस्सार्धं गुरुर्ब्रह्माणि वा यथा ।
ओं चं सद्योजाताय हुम्फण्णमः ।
ओं चिं वामदेवाय हुम्फण्णमः ।
ओं चुं अघोराय हुम्फण्णमः ।
ओं चें तत्पुरुषाय हुम्फण्णमः ।
ओं चों ईशानाय हुम्फण्णमः ।
जपं निवेद्य सन्तर्प्य विज्ञाप्याऽऽनतिपूर्वकम् ॥ ३७ ॥
देवस्सन्निहितो यावत् तावत्त्वं सन्निधी भव ।
न्यूनाधिकं च यत्किञ्चित्कृतमज्ञानतो मया ॥ ३८ ॥
त्वत्प्रसादेन चण्डेश तत्सर्वं परिपूरय ।
बाणलिङ्गे चले लौहे सिद्धलिङ्गे स्वयम्भुवि ॥ ३९ ॥
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ।
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि ॥ ४० ॥
एवं संस्थाप्य चण्डेशं चण्डदोषनिवृत्तये ।

यजमानाय अभिषेककरणम् ।

यजमानं सबन्धुं च सभार्यं सपरिग्रहम् ॥ ४१ ॥
यूपस्थापितकुम्भेन स्नापयेत्स्थापकस्स्वयम् ।

---

१. यूपेति पूर्वस्थापितकुम्भजलेनेति शिवलिङ्गप्रतिष्ठाविधिः ।

आचार्यादिदक्षिणा।

स्थापकं यजमानोऽपि सम्पूज्य च महेशवत् ॥ ४२ ॥
वित्तशाठ्यं विना दद्याद्भूहिरण्यादिदक्षिणाम्[1]।
यथा सन्तोषमायाति तथा पूज्यो गुरुस्तदा ॥ ४३ ॥
असन्तुष्टे गुरौ यस्मात् न कर्तुस्तत्फलं भवेत्।
मूर्तिपान् विधिवत्पश्चात् जापकान् ब्राह्मणांस्तथा ॥४४॥
दैवज्ञं शिल्पिनं पश्चात् शक्त्या[2] सम्पूजयेत्ततः।
क्रमाद्दीनान्धकान् क्लिष्टान् सर्वानेतान् प्रपूजयेत् ॥४५॥

लिङ्गस्थापनफलप्रदर्शनम्।

स्थापकश्च फलं तुष्टस्ततः कर्तुः प्रदर्शयेत्।
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ॥ ४६ ॥
तावद्युगसहस्राणि कर्तुर्गेहभुजः[3] फलम्।

स्थापकं प्रति कर्त्रुपचारकथनम्।

यदत्र सम्मुखीभावे खेदितो भगवन्मया ॥ ४७ ॥

---

१. दक्षिणामिति एतदनन्तरं शिवलिङ्गप्रतिष्ठाविधौ "तत्प्रातिष्ठितहस्तादि हस्ताङ्गुलकसंख्यया। निष्कं स्वर्णस्य दातव्यं भक्त्या द्वित्रिगुणं नृपैः" इत्युक्तम्। सिद्धान्तशेखरे दक्षिणाप्रदानविधिर्विस्तरेण प्रतिपादितः। २. सम्पूज्य दक्षिणां ददेदिति शिवलिङ्गप्रतिष्ठाविधौ वर्तते। ३. गेहेति भोगभुज इति शिवलिङ्गप्रतिष्ठाविधिः। एतद्ग्रन्थे फलान्तरमप्युक्तम्। तद्यथा—"सर्वयज्ञतपोदानसर्वतीर्थेषु यत्फलम्। तत्फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः॥ लिङ्गे च स्थापिते मोक्षो भूतयश्च निरन्तराः। पितृजं मातृजं चैव यतश्चोद्वहते द्वयम्॥ कुलैकविंशमुत्तार्य ततो गच्छेत्पराङ्गतिम्" इति। एतदनन्तरं "यदत्र सम्मुखीभावे" इति पद्यं वर्तते।

क्षमस्व नाथ तत्सर्वं कारुण्याम्बुनिधे मम ।

यजमानाय प्रतिष्ठापुण्यसमर्पणम् ।

इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ४८ ॥

प्रतिष्ठापुण्यसम्भारं स्फुरत्तारकसप्रभम् ।
कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ४९ ॥

ततः पाशुपतं जप्त्वा प्रणम्य परमेश्वरम् ।
ततोऽपि बलिभिर्भूतान् सन्निधाय निरोधयेत् ॥ ५० ॥

स्थातव्यं भवता तावत् यावत्सन्निहितो हरः ।
गुरुर्वस्त्रादियुक्तं च गृह्णीयाद्यागमण्टपम् ॥ ५१ ॥

सर्वोपकरणं शिल्पी तथा स्नपनमण्टपम् ।

साध्यसरिदादीनां तत्तत्तत्त्वव्याप्तिप्रदर्शनम् ।

अन्यदेवादयस्स्थाप्या मन्त्रैस्स्वागमसम्भवैः ॥ ५२ ॥

आदिवर्णस्य भेदाद्वा स्वतत्त्वव्याप्तिभाविताः ।
साध्यप्रमुखदेवाश्च सरितो ऋषयस्तथा ॥ ५३ ॥

क्षेत्रपाः किन्नराद्याश्च पृथिवीतत्त्वमाश्रिताः ।
स्थानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ॥ ५४ ॥

भुवनाधिपतीनां च स्थानं यत्र व्यवस्थितम् ।
अण्डबुद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ॥ ५५ ॥

तन्मात्राणि प्रधानं पुंस्तत्त्वमेतत्त्रिकं हरेः।
नागेशगणमातॄणां यक्षेशशरजन्मनाम् ॥ ५६ ॥
अण्डधीशुद्धविद्यान्तं पदं गणपतेस्तथा।
[1]मायासदेशशक्त्यन्तं
शिवकुम्भाभिषेकः।
[2]शिवान्तिकघटार्घ्यतः ॥ ५७ ॥
सं[3]स्नाप्य कलशैरन्यैस्तद्वत्पञ्चामृतादिभिः।
विलिप्य चन्दनाद्यैश्च सम्पूज्य जगदीश्वरम् ॥ ५८ ॥
उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया।
ततस्त्रितत्त्वविन्यासं षडध्वादिपुरस्सरम् ॥ ५९ ॥
कृत्वा मूर्तिं तदीशानामङ्गानां ब्रह्मणामथ।
ज्ञानीं लिङ्गे क्रियां पीठे विन्यस्य स्नापयेत्ततः ॥६०॥
कुङ्कुमाद्यैस्समभ्यर्च्य भूषयेत्सर्वभूषणैः।
सघृतं गुग्गुलुं दग्ध्वा व्यापित्वेन शिवं न्यसेत् ॥ ६१ ॥
स्रक्धूपदीपनैवेद्यं हृदयेन फलानि च।
विनिवेद्य यथाशक्ति समाचम्य महेश्वरे ॥ ६२ ॥

---

१. मायेति मृगेन्द्रपद्धतिव्याख्यानदृष्ट्या "मायासदेशशक्त्यन्तं शिवाशिवोष्णरोचिषाम्। पदमीश्वरपर्यन्तं व्यक्ताचार्यासु प्रकीर्तितम्" इति वर्तितव्यम्। २. शिवान्तिकेति शिवान्तिमघटार्थत इति मातृकायां वर्तते। अत्र मातृकायां कानि चिद्वाक्यानि त्रिशीर्णानीति भाति। ३. संस्नाप्येति सिद्धान्तशेखरे अभिषेकप्रकारो व्यतनि।

दत्वार्घ्यं च जपं कृत्वा निवेद्य वरदे करे ।
चन्द्रार्कतारकं यावन्मन्त्रेशैर्मूर्तिपैस्सह ॥ ६३ ॥
स्वेच्छयैव त्वया नाथ स्थातव्यमिह मन्दिरे ।

वृषभस्थापनम् ।

प्रणम्यैवं बहिर्गत्वा हृदा वा प्रणवेन वा ॥ ६४ ॥
संस्थाप्य वृषभं पश्चात्पूर्ववद्बलिमाचरेत् ।

तदनन्तरकरणीयविधिः ।

न्यूनादिदोषमोक्षाय ततो मृत्युञ्जिता शतम् ॥ ६५ ॥
शिवेन समिधो हुत्वा शान्त्यर्थं पायसेन वा ।
ज्ञानाज्ञानकृतं यत्तु तत्पूरय महाप्रभो ॥ ६६ ॥
हिरण्यपशुभूम्यादि गीतवाद्यादिहेतवे ।
अमुकेशाय तद्भक्त्या शक्त्या सर्वं निवेदयेत् ॥ ६७ ॥
दानं महोत्सवं पश्चात् कुर्याद्दिनचतुष्टयम् ।
त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन्मूर्तिपैस्सह[1] ॥ ६८ ॥
चतुर्थेऽहनि सम्पूर्णे चरुकं बहुरूपिणा ।
निवेद्य सर्वकुण्डेषु सम्पाताहुतिशोधितम् ॥ ६९ ॥
दिनं चतुष्टयं याव(त्तन्नि)न्ननिर्माल्यं तदूर्ध्वतः ।
निर्माल्यापनयं कृत्वा स्नापयित्वा प्रपूजयेत् ॥ ७० ॥

---

१. द्वितीयदिवसे तृतीयदिवसे च होमप्रकारः शिवलिङ्गप्रतिष्ठाविधौ वर्तते ।

पूजा सामान्यलिङ्गेषु कार्या साधारणाणुभिः ।
विहाय लिङ्गचैतन्यं कुर्यात्स्वाणुविसर्जनम् ॥ ७१ ॥

असाधारणलिङ्गेषु क्षमस्वेति विसर्जनम् ।
आवाहनमभिव्यक्तिर्विसर्गश्शक्तिरूपता ॥ ७२ ॥

प्रतिष्ठान्ते क्वचित्प्रोक्तास्स्थिराद्याहुतिसप्तकम्[1] ।
स्थिरस्तथाऽप्रमेयश्चानादिबोधस्तथैव च ॥ ७३ ॥

नित्योऽथ सर्वगश्चैवाविनाशी तृप्त एव च ।
एते गुणा महेशस्य सन्निधानाय कीर्तिताः ॥ ७४ ॥

ओं नमश्शिवाय स्थिरो भव स्वाहा । इत्याहुतीनां क्रमः ।

एवमेतच्च सम्पाद्य विधाय शिवकुम्भवत् ।
कुम्भद्वयं च तन्मध्यादेवं कुम्भाम्भसा भवम् ॥ ७५ ॥

संस्नाप्य तद्द्वितीयं तु कर्तृस्नानाय धारयेत् ।
दत्वा बलिं समाचम्य बहिर्गच्छेच्छिवाज्ञया ॥ ७६ ॥

जगतीबाह्यचण्डपूजा ।

जगतीबाह्यतश्चण्डमैशान्यां दिशि मन्दिरे ।
धामगर्भप्रमाणे च स्वपीठे कल्पितासने ॥ ७७ ॥

---

१. स्थिरेति "लिङ्गपीठस्थिराद्यर्थं स्थिराद्याहुतिसप्तकम्" इति सिद्धान्तशेखरकृत् ।

पूर्ववन्न्यासहोमादि विधाय ध्यानपूर्वकम् ।
संस्थाप्य विधिवत्तत्र ब्रह्माङ्गैः पूजयेत्ततः ॥ ७८ ॥

अङ्गानि पूर्वमुक्तानि (शिवाशिवोष्णरोचिषाम् ।
पदमीश्वरपर्यन्तं व्यक्तार्चासु च कीर्तितम्) ॥ ७९ ॥

कूर्माद्यं कीर्तितं यच्च यच्च रत्नादिपञ्चकम् ।
प्रक्षिपेत्पीठगर्ताधः तच्च ब्रह्मशिलां विना ॥ ८० ॥

षड्भिर्विभाजिते गर्भे त्यक्त्वा भागं च पृष्ठतः ।
स्थापनं पञ्चमांशेन यदि वा वसुभाजिते ॥ ८१ ॥

स्थापनं सप्तमे भागे प्रतिमासु सुखावहम् ।
धारणाभिर्विशुद्धिस्स्यात्स्थापने लेप(वि)चित्रयोः ॥८२॥

स्थानादिमासनं तत्र शिलारत्नादिवेशनम् ।
नेत्रोत्पाटनमत्रेष्टमासनादिप्रकल्पितम् ॥ ८३ ॥

पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न नश्यति ।

चललिङ्गस्थापनविधिः ।

विधिस्तु चललिङ्गेषु सम्प्रत्येव निगद्यते ॥ ८४ ॥

पञ्चभिर्वा पृथक्पीठे चतुर्थे वा विभाजिते ।
भागत्रयेण चार्चांशो भवेद्भागद्वयेन वा ॥ ८५ ॥

सपीठेष्वपि तद्वत्स्याल्लिङ्गेषु कि(ञ्च)ञ्चित् भेदतः ।
इष्टमन्त्रेण संस्कारो विधिवत्स्फाटिकादिषु ॥ ८६ ॥

किञ्च ब्रह्मशिलारत्नप्रभृतेश्च निवेशनम् ।
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् ॥ ८७ ॥

स्वयम्भुबाणलिङ्गानां नियमः पीठसंस्कृतौ ।
मूर्तिप्रभृतिविन्यासे न दृष्टो नियमः क्वचित् ॥ ८८ ॥

स्नपनं संहितामन्त्रैर्न्यासं होमं च कारयेत् ।
नदीसमुत्थलोहानां स्थापनं पूर्ववन्मतम् ॥ ८९ ॥

ऐहिकं मृण्मयं लिङ्गं (वेष्टि)पैष्टकादि च तत्क्षणात् ।
कृत्वा सम्पूजयेच्छुद्धं वीक्षणादिविधानतः ॥ ९० ॥

समादाय ततो मन्त्रानात्मसंस्थान् विधाय च ।
तज्जले प्रक्षिपेल्लिङ्गं वत्सरात्कामदं भवेत् ॥ ९१ ॥

उक्तं च स्थापनं शम्भोश्श्रीमता सोमशम्भुना ।
गौर्यादिस्थापनं यच्च तदिदानीमिहोच्यते ॥९२-१६६०॥

इति श्रीक्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ
काम्यविधौ शिवप्रतिष्ठाविधिस्सम्पूर्णः ।

---

# अथ गौरीप्रतिष्ठा ।

---

अथ गौरीप्रतिष्ठायां विधाय मण्टपादिकम् ।
संस्नाप्य पूर्ववद्देवीं शय्यायामधिरोप्य च ॥ १ ॥
शिखामारभ्य फालान्तं फालाच्च हृदयान्तकम् ।
हृदयान्नाभिपर्यन्तं नाभेर्जानुद्वयान्तकम्[1] ॥ २ ॥
जानुभ्यां पादपर्यन्तं मूर्त्यादिविनिवेशनम् ।
आत्मविद्याशिवत्वं च कुर्यादीशानिवेशनम् ॥ ३ ॥
शिवं परोत्परं[2] न्यस्य हुत्वा जप्त्वा च पूर्ववत् ।
सन्धाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम् ॥४॥
सदेशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा ।
एवं संस्थाप्य तां पश्चाद्देवीं तस्यां नियोजयेत् ॥ ५ ॥
पराशक्तिस्वरूपां तां स्वाणुना[3] सृष्टियोगतः ।
ततो न्यसेत्क्रियाशक्तिं पीठे ज्ञानीं च विग्रहे ॥ ६ ॥
ततोऽपि व्यापिनीं शक्तिमावाह्य विनियोजयेत् ।
अमुकेशीति[4]नामापि समालभ्य प्रपूजयेत् ॥ ७ ॥

---

१. द्वयानुगमिति मातृकायां वर्तते । २. परावरमिति मातृकापाठः । ३. स्वाणुना सार्णना इति मातृकायां वर्तते । ४. अमुकेशीति अमुकेश्वरीति नाम सङ्कल्प्य पूजयेत् इत्यर्थः ।

ततो मन्त्रा भवन्ति—ओं (हूं[1]) आं आधारशक्त्यै नमः। ओं ईं कन्दाय नमः। ओं ऊं नाळाय नमः। ओं ॠं धर्माय नमः। ओं ॠं ज्ञानाय नमः। ओं ॡं वैराग्याय नमः। ओं ॡं ऐश्वर्याय नमः। ओं ॠं अधर्माय नमः। ओं ॠं अज्ञानाय नमः। ओं ॡं अवैराग्याय नमः। ओं ॡं अनैश्वर्याय नमः। ओं अं अधश्छदनाय नमः। ओं अः ऊर्ध्वच्छदनाय नमः। ओं अं पद्माय नमः। ओं हं केसरेभ्यो नमः। ओं हं कर्णिकायै नमः। ओं क्षं पुष्पेभ्यो नमः। ओं ह्रां प्रध्व्यै नमः। ओं ह्रीं ज्ञान्यै नमः। ओं ह्रीं क्रियायै नमः। ओं ह्रीं इच्छायै[2] नमः। ओं ह्रूं वागीश्वर्यै नमः। ओं ह्रैं ज्वालिन्यै नमः। ओं ह्रौं वामायै नमः। ओं (ह्रूं) ह्रं ज्येष्ठायै नमः। ओं ह्रः रौद्र्यै नमः इत्यादि नवशक्तयः। ओं गौं गौर्यासनाय नमः। ओं गौं गौरीमूर्तये नमः।

सुगन्धां (गन्धां च) कुसुमारूढां तप्तचामीकरप्रभाम्।
चतुर्भुजैकवदनां त्रिणेत्रां परमेश्वरीम् ॥ ८ ॥
सर्वलक्षणसम्पूर्णां सर्वाभरणभूषिताम्।
अक्षमालाङ्कुशौ पाशमपरे बीजपूरकम् ॥ ९ ॥

---

१. हूमिति अत्र आधारशक्त्यादिमन्त्रक्रमे देवीप्रतिष्ठाविधिग्रन्थस्य अस्य च वैलक्षण्यं दृश्यते। २. ओं हूं कवचाय नम इति मातृकायां वर्तते।

एवं ध्यात्वा महागौरीं सौभाग्यां च वरप्रदाम् ॥
॥ ९½–१६६९½ ॥

ओं ह्रीं[1] सः महागौरि रुद्रदयिते स्वाहा । गौर्यै नम इति मूलमन्त्रम् । ओं गां हृदयाय नमः । ओं गीं शिरसे नमः । ओं गूं शिखायै ममः । ओं गैं कवचाय नमः । ओं गौं नेत्राय नमः । ओं गः अस्त्राय नमः । ओं सीं ज्ञानशक्त्यै नमः । ओं सूं क्रियाशक्त्यै नमः । लोकपालमन्त्राः पूर्वोक्ताः ओं ह्लां सुभगायै नमः । ओं ह्लीं ललितायै नमः । ओं ह्लूं कैरिण्यै[2] नमः । ओं ह्लों कौममालिन्यै[3] नमः । इत्येता गौरीसमाख्याः ।

क्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ काम्यविधौ
गौरीप्रतिष्ठाविधिस्समाप्तः ।

---

# अथ आदित्यस्थापनविधिः ।

आदित्यस्य प्रतिष्ठायां पूर्ववन्मण्डपादिकम् ।
स्नानादिकं च सम्पाद्य पूर्वोक्तविधिना ततः ॥ १ ॥

---

१. ह्रीमिति ह्रां ह्रीं सः इति देवीप्रतिष्ठाविधौ वर्तते । २. कामिन्यै नमः इति देवीप्रतिष्ठाविधिपाठः । ३. मालिन्यै नमः इति देवीप्रतिष्ठाविधिपाठः ।

विद्यान्तासनशय्यायां साङ्गं विन्यस्य भास्करम् ।
त्रितत्त्वं विन्यसेत्तत्र सेश्वरं[1] खादिपञ्चकम् ॥ २ ॥

शुद्ध्यादि पूर्ववत्कृत्वा पिण्डिकां चैव पूर्ववत् ।
सदेशपदपर्यन्तां न्यस्तरत्नादिपञ्चकाम् ॥ ३ ॥

शक्त्या च सर्वतोमुख्या सं(स्ना)स्थाप्य विधिना ततः ।
स्वाणुना विधिवत्सूर्यं शक्त्यन्तं स्थापयेद्गुरुः ॥ ४ ॥

[2]स्वाम्यन्तमथवाऽऽदित्य[3]पदान्तं नाम धारयेत् ।
सूर्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्यास्स्थापनेऽपि च ॥

॥ ५-१६७४½ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ काम्यविधौ
आदित्यस्थापनविधिस्समाप्तः ।

---

# अथ विष्णुस्थापनविधिः ।

अथ संस्थापने विष्णोः प्रागुक्तं मण्टपादिकम् ।
कुर्यात्स्नानादिसम्पत्तौ भद्रपीठं च हास्तिकम् ॥ १ ॥

---

१. सेश्वरं मूर्तीश्वरसहितम् । २. स्वाद्यन्तामिति मातृकापाठः । ३. पादान्तं इति मातृकायां वर्तते । ४. उत्तरकारणेऽपि सौरस्थापनविधिः वर्तते ।

ओं आं ईं ऊं तथा ऐं च ओं औं अश्च ध्रुवादिकाः ।
सचतुर्थी(कर) विभक्त्यन्ताः पद्मं च हृदयं शिरः ॥२॥

शिखां च कवचं नेत्रमस्त्रमेतैस्तु मध्यमैः ।
मन्त्रा भवन्ति पद्माद्याः क्रमात्सप्तैव ते यथा ॥ ३ ॥

ओं नमोऽस्तु भवेदादौ मध्ये भगवते ततः ।
वासुदेवाय इत्यन्ते मूलमन्त्रः प्रकीर्तितः ॥ ४ ॥

अवान्तरेण रूपेण योऽयं मूर्तिस्समीरितः ।
स एवाऽनेन मन्त्रेण विष्णुस्साक्षाद्यवस्थितः ॥ ५ ॥

मण्टपादिषु संस्कारान् दिगीशावाहनार्चने ।
कृत्वा हृदा हृदास्त्रेण गायत्र्या कवचेन च ॥ ६ ॥

देवस्य स्नपनं लक्ष्म्याः पुनस्स्नानं यथाक्रमम् ।
विधाय परिधानं च दत्वा पूर्ववदासनम् ॥ ७ ॥

मूर्तिरूपञ्च शय्यायां निवेश्य तदनन्तरम् ।
द्वादशाक्षरमन्त्रस्य कृत्वा न्यासमनन्तरम् ॥ ८ ॥

खड्गादीनां च विन्यस्य मन्त्री कुर्याच्च तद्यथा ।
शिरोघ्राणललाटेषु त्वास्ये कण्ठे हृदि ह्यपि ॥ ९ ॥

दक्षदोर्वामदोर्वामदक्षजङ्घाङ्घ्रिषु क्रमात् ।
ज्वालामालाश्वेतमेचमेचकादित्यसप्रभान् ॥ १० ॥

पीतशुक्लारुणश्वेतविद्युत्पीतसितारुणान् ।
ओङ्कारादियकारान्तवर्णान् द्वादश विन्यसेत् ॥ ११ ॥

स्वयम्भूपाञ्चरात्रे च सर्वमेतदुदीरितम् ।
ततः खड्गं शिखायां च मस्तके शार्ङ्गमेव च ॥ १२ ॥

चतुर्थ्यन्तनमोऽन्तेन स्वनाम्ना ध्रुवयोनिना ।
मन्त्रेणैवं विधेनाथ बाह्वोश्च मुसलं हलम् ॥ १३ ॥

प्रणवाद्येन च रथं चक्राय मध्यवर्तिना ।
नमोऽन्तेनाणुना चक्रं नाभौ जठरपृष्ठयोः ॥ १४ ॥

ध्रुवपूर्वेण भं णं मं....शङ्खाय नमोऽणुना ।
अनेन शिश्नमेढ्रे च गुरुश्शङ्खं निवेशयेत् ॥ १५ ॥

प्रणवपूर्वं खं ठं विं थं गदायै नमोणुना ।
मन्त्री गदामनेनैव जङ्घाजानुषु विन्यसेत ॥ १६ ॥

पद्मं च पद्ममन्त्रेण गुल्भपादेषु विक्षिपेत् ।
शिरसि केशवं वक्त्रे नारायणं च माधवम् ॥ १७ ॥

ग्रीवायामथ कण्ठे च गोविन्दं हृदये पुनः ।
विष्णुं च पृष्ठवंशे तु तथैव मधुसूदनम् ॥ १८ ॥

कुक्षौ त्रिविक्रमं कट्यां वामनं जङ्घयोः पुनः ।
श्रीधरं च हृषीकेशं पद्मनाभं च पादयोः ॥ १९ ॥

दामोदरं च सर्वांस्तान् मूर्तिभूतान् विनिक्षिपेत् ।
द्वादशाक्षरमन्त्रैकैकाक्षरादिस्वसंज्ञया ॥ २० ॥
द्वितीयं हृदयाख्यं तु प्रोच्यते साम्प्रतं यथा ।
हृदयादिनमोऽन्तश्च ओं हूमित्यादिकं तथा ॥ २१ ॥
मन्त्रो हृदयसंज्ञस्स्यात् ओं विष्णवे नमः पुनः ।
शिरोभिधायको मन्त्रः (प्रसीदश्च)तदागमे ॥ २२ ॥
प्रणवाद्यं नमोन्तं च ब्रह्मण्येति ध्रुवेति च ।
शिखावर्मक्रमादस्त्रं ओं चक्रेति फडन्तया ॥ २३ ॥
ओङ्काराद्यनमोन्तौ च सम्भविष्यज्जयाविमौ ।
यथाक्रमश्च गायत्री सावित्रीत्यभिधायकौ ॥ २४ ॥
प्रणवादिनमोन्तश्च क्षीं रूपायेतिमध्यगः ।
पिङ्गलास्त्रमिति ज्ञेयो मन्त्रस्सप्ताक्षरस्तु सः ॥ २५ ॥
चतुर्थ्यन्तश्चतुर्थ्यन्तान् मन्त्रानेतान् हृदादिकान् ।
गायत्रीमथ सावित्रीं नेत्रयोर्वामदक्षयोः ॥ २६ ॥
विन्यस्य च यथास्थानं भक्तितः पूजयेत्ततः ।
ओं क्षिं पिङ्गलाक्षाय नमः ।
विन्यस्य चोदितं चक्रं द्वादशारसुभासुरम् ॥ २७ ॥
तस्य मध्ये पुनर्ध्येयं पद्ममष्टदळं ततः ।
हृन्मन्त्रं कर्णिकायां च शिरः पूर्वदळे ततः ॥ २८ ॥

शिखां च दक्षिणे पत्रे पश्चिमे कवचं न्यसेत् ।
अस्त्रमुत्तरतो न्यस्य गायत्रीमग्निपत्रके ॥ २९ ॥

सावित्रीमीशपत्रे च नेत्रं च नैऋते दळे ।
ततश्च वायुपत्रे च पिङ्गळास्त्रं विनिक्षिपेत् ॥ ३० ॥

गर्भावरणमित्युक्तमधुनावरणान्तरम् ।
द्वादशारे च चक्रेऽस्मिन् केशवाद्यं यथाक्रमम् ॥ ३१ ॥

[1]प्रणवाद्यैर्यथागारमुक्तपूर्वैस्स्वनामभिः ।
प्रागादितश्च विन्यस्य खड्गं गदामनन्तरम् ॥ ३२ ॥

चक्रं शङ्खं च पद्मं च हलं च मुसलं ततः ।
शार्ङ्गं च विन्यसेदेवं तृतीयावरणं भवेत् ॥ ३३ ॥

पुष्पधूपैश्च नैवेद्यवस्त्रालङ्कारकादिभिः ।
ततस्समाहितो मन्त्री साङ्गं देवं प्रपूजयेत् ॥ ३४ ॥

पञ्चमूर्त्यात्मके न्यासे मूलमन्त्रो भवेद्यथा ।
नमोऽन्तो वासुदेवाय ओं आं इत्यादिकस्तथा ॥ ३५ ॥

ओं आं ओं ईं ओं ऊं ओं अं ओं अः ओं युग्मपूर्वकाः ।
सङ्कर्षणप्रद्युम्नानिरुद्धनारायणके[2]शवक्रमात् ॥ ३६ ॥

नमोन्तास्सचतुर्थीका मूर्तीशा मूर्तयः पुनः ।
पञ्चक्षित्यादियोगानां विन्यासोऽत्राविसर्जनम् ॥ ३७ ॥

---

१. प्रणवाद्ये यथाकार इति मातृकापाठः । २. अक्षराधिक्यं वर्तते ।

अष्टमूर्त्यादिपक्षेऽपि प्रोक्ता एव तदीश्वराः ।
सहस्रं मूलमन्त्रस्य तदर्धमथवा गुरुः ॥ ३८ ॥
पूर्णावसानकं हुत्वा जप्त्वा श्रोत्रे निवेदयेत् ।
पूर्ववच्च बलिं दत्वा यागदोषनिवृत्तये ॥ ३९ ॥
हुत्वा च व्याहृतीस्तद्वत्संस्कुर्यात्पिण्डिकामधः ।
लक्ष्मीनमोऽवसानेन ओं घं ढं भं हमादिना ॥ ४० ॥
मन्त्रेणानेन सञ्चिन्त्य लक्ष्मीभूतां च पूर्ववत् ।
एतैश्च पञ्चसङ्ख्यातैरेतन्मन्त्रव्यवस्थितैः ॥ ४१ ॥
अक्षरैर्हृच्छिरश्चूडावर्मनेत्राभिधायकैः ।
हुम्फडस्त्रावसानेन समुदायेन वा क्वचित् ॥ ४२ ॥
संस्कृत्य तामिमां प्राग्वत्प्रासादे वेशयेत्ततः ।
प्रकृतिव्यापिनीं न्यस्य लक्ष्मीमन्त्रेण पिण्डिकाम् ॥ ४३ ॥
ओं मौं लक्ष्मीमूर्तये नमः ।
ओं घं ढं भं हं महालक्ष्म्यै नमः ।
पूर्ववन्न्यस्य रत्नानि ततश्च द्वादशाक्षरम् ।
पुरुषान्तं समुच्चार्य पीतवस्त्रं चतुर्भुजम् ॥ ४४ ॥
शङ्खचक्रगदाशार्ङ्गपाणिं च वनमालिनम् ।
विष्णुं संस्थापयेत्तत्र चक्रं पद्मासनं ततः ॥ ४५ ॥
नमोन्तव्यापकं तत्र मूर्तिमूर्त्यात्मकांस्तथा ।
तन्मात्रेष्वात्मतत्त्वं च विद्यातत्त्वं प्रधानकम् ॥ ४६ ॥

पुरुषान्तं भवेदीशं विभाव्यैवमतः परम् ।
परा(व)त्परं समावाह्य देवं त्र्यावरणान्वितम् ॥ ४७ ॥

सम्पूज्य विधिवद्भक्त्या शेषं पूर्ववदाचरेत् ।
स्वाम्यन्तं माधवान्तं वा कर्तृनाम्ना च संयुतम् ॥४८॥
धारयेन्नाम देवस्य विष्णोस्स्थापनमीरितम् ॥

॥ ४८½—१७२३ ॥

क्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ काम्यविधौ
विष्णुस्थापनविधिस्समाप्तः ।

---

# अथ द्वाराश्रितप्रतिष्ठा ।

द्वाराश्रितप्रतिष्ठायामिदानीं विधिरुच्यते ।
द्वारा[1]ङ्गानि कषायाद्यैस्संस्कृ[2]त्य शयने न्यसेत् ॥ १ ॥

मूलमध्याग्रभागेषु त्रयमात्मादि सेश्वरम् ।
विन्यस्य सन्निरुध्यापि हु[3]त्वा जप्त्वानुरूपतः ॥ २ ॥

द्वारादधो यजेद्वास्तु तत्रैवानन्तमन्त्रतः ।
रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३ ॥

---

१. द्वारेति द्वारपालान् । २. संस्कृत्य संस्नाप्य वस्त्रैराच्छाद्येत्यर्थः । ३. हुत्वा भागत्रयविशुद्ध्यर्थमिति शेषः ।

यवसिद्धार्थकक्रान्तऋद्धिवृद्धिसहातिलाः ।
गोमृद्दरदरोगेन्द्र[1]मोहिनीलक्ष्मणा [2]मता ॥ ४ ॥
रोच[3]नारग्वथो दूर्वा माषादध्न(श्च्यवो)ऽ[4]ङ्गुलम् ।
कृत्वोर्ध्वोदुम्बरे बद्ध्वा रक्षार्थं प्रणवेन तु ॥ ५ ॥
द्वारमुत्तरतः किञ्चिदाश्रितं सन्निवेशयेत् ।
आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं तु शाखयोः ॥ ६ ॥
शिवमाकाशदेशे च व्यापकं सर्वपुद्गले ।
ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः ॥ ७ ॥
द्वाराश्रितांश्च नन्द्यादीन् हृत्संयुक्तैस्स्वनामभिः ।
जुहुयाच्छतमर्धं वा द्विगुणं शक्तितोऽथवा ॥ ८ ॥
न्यूनादिदोषमोक्षार्थं हेतिना जुहुयाच्छतम् ।
दिग्बलिं पूर्ववद्दत्वा प्रदद्याद्दक्षिणादिकम् ॥९-१७३२॥

क्रियाकाण्डक्रमावळ्यारुयसोमशम्भुपद्धतौ काम्यविधौ
द्वाराश्रितप्रतिष्ठाविधिस्समाप्तः ।

---

१. रोगोण्ड इति सिद्धान्तशेखरपाठः । २. मृता इति सिद्धान्तशेखरपाठः । ३. रोचनेति "हंसपादं सहदेवीं दधिपूर्वां च रोचकां" इति सिद्धान्तशेखरपाठः । ४. वोगुलमिति मातृकापाठः ।

# अथ हृत्कुम्भप्रतिष्ठाविधिः ।

अथ प्रासादचैतन्यसम्बन्धो दृश्यतेऽधुना ।
शुकनासासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥ १ ॥

आधारशक्तितः पद्मे विन्यसेत्प्रणवेन तु ।
स्वर्णाद्येकतमोद्भूतं पञ्चगव्येन संयुतम् ॥ २ ॥

मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम् ।
सवस्त्रं गन्धलिप्तं च गन्धवत्पुष्पधूपितम् ॥ ३ ॥

चूतादिपल्लवास्यं च हृदा हृत्पद्मवन्न्यसेत् ।
पूरकेण समादाय सकलीकृतविग्रहः ॥ ४ ॥

सर्वात्माभिन्नमात्मानं स्वाणुना स्वान्तमा(नस)रुतः ।
[1]आज्ञया बोधयेच्छम्भोः रेचकेन ततो गुरुः ॥ ५ ॥

द्वादशान्तात्समादाय स्फुरद्वह्निकणोपमम् ।
निक्षिपेत्कुम्भगर्भे च न्यस्य तत्राऽऽतिवाहिकम् ॥ ६ ॥

विग्रहं तद्गुणानां च बोधकं च कलादिकम् ।
[2]क्ष्मान्तं च सेश्वरं तत्त्वव्रातं तत्र निवेशयेत् ॥ ७ ॥

---

१. आज्ञया "आत्मन् शिवाज्ञया कुम्भे प्रासादहृदयोपमे । स्थातव्यं सर्वदा प्रीत्या त्वया तमिति बोधयेत्" इति सिद्धान्तशेखरकृत् । २. क्ष्मेति "प्रकृत्यादिधरान्तानि कुम्भे तत्त्वानि विन्यसे"दिति सिद्धान्तशेखरकृत् ।

दश नाडीर्दशप्राणानिन्द्रियाणि त्रयोदश ।
तदधिपांश्च हि संयोज्य प्रणवाद्यैस्स्वनामभिः ॥ ८ ॥

स्वकार्यकारणत्वेन मायां कालं नियामकम्[1] ।
विद्येशान् प्रेरकान् शम्भुं व्यापकं च स्वशम्बरैः॥ ९ ॥

अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया ।
सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषान्तकम् ॥ १० ॥

पञ्चगव्यकषायाद्यैः पूर्ववत्संस्कृतं ततः ।
शय्यायां च समारोप्य ध्यात्वा रुद्रमुमापतिम् ॥ ११ ॥

तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत् ।
सन्निधानाय होमं च प्रोक्षणं स्पर्शनं जपम् ॥ १२ ॥

सान्निध्यं रोधनं सर्वं भागत्रयविभागतः ।
विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत् ॥ १३-१७४५॥

इति श्रीक्रियाकाण्डक्रमावल्याख्यसोमशम्भुपद्धतौ
काम्यविधौ हृत्कुम्भप्रतिष्ठाविधिस्समाप्तः ।

---

१. नियामकं इति नियतिमित्यर्थः ।

# अथ चूळिकाध्वजदण्डविधिः ।

चूळिके ध्वजदण्डे च ध्वजे देवा(कुले)लये तथा ।
प्रतिष्ठा च यथोद्दिष्टा तथेदानीमिहोच्यते ॥ १ ॥
कटाहार्धप्रवेशाद्वा यद्वा सर्वप्रवेशनात् ।
ऐष्टिके दारुजा चूळिश्शैलजे धाम्नि शैलजा ॥ २ ॥
कर्तव्या लिङ्गमानेन कुम्भे वा प्रोक्तमानतः ।
स च त्रिशूलयुक्तस्तु गृहचूडाभिधानतः ॥ ३ ॥
ईशचूळिस्समाख्यातो मूर्ध्नि लिङ्गसमन्वितः ।
बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥ ४ ॥
चित्रो ध्वजश्च जङ्घान्तो यद्वा जङ्घार्धतो भवेत् ।
भवेद्वा दण्डमानस्तु यदि वाथ यदृच्छया ॥ ५ ॥
महाध्वजस्समाख्यातो यस्तु पीठस्य वेष्टकम् ।
(स)चक्रैर्ग्रहैरसैर्वाऽपि हस्तैर्दण्डस्तु सम्मतः ॥ ६ ॥
उत्तमादिक्रमेणैव विज्ञेयस्सूरिभिस्तु सः ।
वंशजस्सालजो यद्वा यद्वा सुन्दरिसम्भवः ॥ ७ ॥
कार्यश्शुभतरूत्थोऽपि स भवेत्सर्वकामदः ।
अयमारोप्यमाणस्तु भङ्गमायाति वा यदि ॥ ८ ॥

---

१. सर्वाध्वेवप्रवेशनादिति मातृकापाठः ।

राज्ञोऽनिष्टं विजानीयाद्यजमानस्य वा तदा ।
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् ॥ ९ ॥

द्वारपूजादिपूजां च मन्त्राणां तर्पणं तथा ।
विधाय चूळिकं[1] दण्डं स्थापयेदस्त्रमन्त्रतः ॥ १० ॥

अनेनैव तु मन्त्रेण ध्वजं सम्प्रोक्ष्य देशिकः ।
मृत्कषायादिभिस्स्नानं प्रासादं कारयेत्ततः ॥ ११ ॥

विलिप्य च समाच्छाद्य शय्यायां पूर्ववन्न्यसेत् ।
चूळिके लिङ्गवन्न्यासो न च ज्ञानी न च क्रिया ॥१२॥

विशेषाध्वा चतुर्थेचं[2] न च चण्डस्य कल्पना ।
दण्डे तथाऽऽत्मतत्त्वं च विद्यातत्त्वं द्वितीयकम् ॥१३॥

सद्योजातादिवक्त्राणि शिवतत्त्वं पुनर्ध्वजे ।
निष्कळं च शिवं तत्र विन्यस्याङ्गानि पूजयेत् ॥१४॥

चूळिके च तथा मन्त्री सान्निध्ये संहिताणुभिः ।
होमयेत्प्रतिभागं च ध्वजे तैस्तु फडन्तकैः ॥ १५ ॥

अन्यथाऽपि....कध्वजं सावरणं क्वचित् ।
अथ यागविधानेन तत्सर्वमुपदर्शितम् ॥ १६ ॥

---

१. चूळिकं इति दण्डकमिति मातृकापाठः। २. चतुर्थी चेति मातृकापाठः ।

प्रासादे कारितस्नाने स्रक्कुश[1]स्त्रादिविभूषिते ।
जङ्घावेदीतदूर्ध्वे तु त्रितत्त्वादि निवेश्य च ॥ १७ ॥

होमादिकं विधायाथ शिवं सम्पूज्य पूर्ववत् ।
सर्वतत्त्वमयं ध्यात्वा शिवं च व्यापकं न्यसेत् ॥ १८ ॥

अनन्तं [2]कालरुद्रं च विभाव्य च पदाम्बुजे ।
कूष्माण्ड[3]हाटकौ पीठे पाताळनरकैस्सह ॥ १९ ॥

भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम् ।
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायां च विभावयेत् ॥ २० ॥

वारितेजोऽनिलव्योमपञ्चाष्टकसमन्वितम् ।
गर्भावरणसंज्ञं च बुद्धिं योन्यष्टकान्विताम् ॥ २१ ॥

[4]योन्यष्टकसमायुक्तं न्यस्य गन्धे गुणत्रयम् ।
घटस्थं पुरुषं सिंहे रागं च परिभावयेत् ॥ २२ ॥

मञ्जरीवेदिकायां च विद्यादिकचतुष्टयम् ।
कण्ठे मायां च रुद्रं च विद्यां चामलसारके ॥ २३ ॥

कलशे चेश्वरं बिन्दुं विद्येश्वरसमन्वितम् ।
जटाचूडश्च तद्विद्याच्छूलं चन्द्रार्धरूपकम् ॥ २४ ॥

---

१. गन्धादि इति वर्तितव्यमिति भाति । २. कामरुद्रमिति मातृकापाठः । ३. भागकौ इति मातृकापाठः । ४. योन्यष्टकेति योग्याष्टकेति मातृकापाठः ।

शक्तित्रयं च तत्रैतद्दण्डे नादं विभावयेत् ।
ध्वजे च कुण्डलीशक्तिमिति धाम विभावयेत् ॥२५॥
जगत्या धाम सन्धाय लिङ्गं पिण्डिकया यथा ।
पूर्ववत्सर्वमत्राऽपि विधानमुपकल्प्य च ॥ २६ ॥
तूर्यमङ्गळनिर्घोषैर्वेदध्वनिसमन्वितैः ।
शिवचूळिं ध्वजं दण्डं गुरुर्मूर्तिधरैस्सह ॥ २७ ॥
समुत्थाप्य स्वमन्त्रैश्च विन्यस्ते शक्तिपङ्कजे ।
न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २८ ॥
यजमानो ध्वजे लग्नो बन्धुमित्रादिभिस्सह ।
धाम प्रदक्षिणीकृत्य लभते फलमीप्सितम् ॥ २९ ॥
गुरुः पाशुपतं ध्यायन् स्थि(र)रो मन्त्राधिपैर्युतम् ।
अधिपान् शस्त्रयुक्तांश्च रक्षणाय निरोधयेत् ॥ ३० ॥
न्यूनादिदोषमोक्षार्थं हुत्वा दत्वा च दिग्बलिम् ।
गुरवे दक्षिणां दद्याद्यागदोषनिवृत्तये ॥ ३१ ॥
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ।
तावद्युगसहस्राणि कर्तुर्गेहभुजः फलम् ॥ ३२ ॥
तत्कोटिगुणितं पुण्यं प्रासादे ध्वजरोहणात् ।
जीर्णेऽपि संस्कृते पुण्यमेतदेव प्रकीर्तितम् ॥३३-१७७८॥

क्रियाकाण्डक्रमावळयाख्यसोमशम्भुपद्धतौ काम्यविधौ
चूळिकाध्वजदण्डविधिस्समाप्तः ।

---

# अथ जीर्णोद्धारविधिः ।



जीर्णादीनां च लिङ्गानामुद्धारविधिरुच्यते ।
जीर्णोद्धारं विना यस्माल्लिङ्गं भूताश्रयं भवेत् ॥ १ ॥

जीर्णाद्यमुद्धरेत्तस्मान्महापुण्यसमीहया ।
तच्च जीर्णं कृशं दग्धं हीनं मानाधिकं तथा ॥ २ ॥

लक्ष्मोत्थितं च भग्नं च स्थूलं वज्रहतं तथा ।
सम्पुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादितः ॥ ३ ॥

इत्यादिदुष्टलिङ्गानां त्याज्या पिण्डिकया वृषः ।
चालितं चलितं निम्नमत्युच्चं विषमं स्थितम् ॥ ४ ॥

दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा ।
एवंविधं च संस्थाप्यं निर्वृणं च भवेद्यदि ॥ ५ ॥

नद्यादिकप्रवाहेण तदपि ह्रियते यदि ।
ततोऽन्यत्राऽपि संस्थाप्यं विधिदृष्टेन कर्मणा ॥ ६ ॥

सुस्थितं दुःस्थितं वापि शिवलिङ्गं न चालयेत् ।
शतेन स्थापनं कुर्यात्सहस्रेण तु चालनम् ॥ ७ ॥

पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् ।
पूजया रहितं यच्च न दुष्टमपि सुस्थितम् ॥ ८ ॥

---

१. पूजादिभिः नित्यपूजादिभिः ।

शतेन स्थापनेत्यादेरयमर्थो विवक्षितः ।
स्थापितं यदि सम्मोहाल्लिङ्गं निम्नादितां व्रजेत्[1] ॥ ९ ॥
सहस्राधिकहोमेन चालनं तु तदा मतम् ।
परित्यक्तशिलायोगं निर्वृणं चललक्षणम् ॥ १० ॥
संसक्तमुद्धरेन्मन्त्री तत्रैव स्थापनाय च ।
विधिना चालितं यच्च प्रागुक्तफलवृद्धये ॥ ११ ॥

जीर्णोद्धारक्रियाक्रमः ।

याम्ये मण्टपमीशे वा प्रत्यग्द्वारैकतोरणम् ।
विधाय द्वारपूजादि [2]स्थण्डिले संप्रपूजयेत् ॥ १२ ॥
मन्त्रान् सन्तर्प्य सम्पूज्य वास्तुदेवांश्च पूर्ववत् ।
दिग्बलिं तद्बहिर्दत्वा समाचम्य ततो गुरुः ॥ १३ ॥
लिङ्गिनो भोजयेच्छैवान् द्विजान् मित्रादि कर्मिणः ।
विज्ञापयेत्ततश्शम्भुं लिङ्गं दुष्टमिदं विभो ॥ १४ ॥
अस्य चोद्धारणे शान्तिस्स्यादित्यस्ति भवद्वचः ।
तस्मादत्र विधातर्मामधितिष्ठ महेश्वर ॥ १५ ॥
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् ।
मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ॥ १६ ॥

---

१. व्रजेदिति एतदनन्तरं सिद्धान्तशेखरे "स्थापनं शतहोमेन तस्य लिङ्गस्य चोदितम्" इति पाठः । २. स्थण्डिले इति स्थण्डिलेऽग्नौ शिवार्चनं इति सिद्धान्तशेखरकृत् ।

ततो लिङ्गं च संस्नाप्य पूजयेत्स्थण्डिले तथा ।
ओं व्यापकेश्वरायेति नमोऽन्तशिववाचिना ॥ १७ ॥

ओं व्यापकेश्वरहृदयाय नमः ।
ओं व्यापकेश्वरशिरसे नमः इत्याद्यङ्गमन्त्राः ।

ततस्तत्राश्रितं सत्त्वं श्रावयेदस्त्रमन्त्रतः ।
सत्त्वः कोऽपि ह्यधः कश्चिल्लिङ्गमाश्रित्य तिष्ठति ॥१८॥

लिङ्गं त्यक्त्वा शिवाज्ञातो यत्रेष्टं तत्र गच्छतु ।
विद्याविद्येश्वरैर्युक्तश्शम्भुरत्र भविष्यति ॥ १९ ॥

सहस्रं प्रतिभागं तु ततः पाशुपताणुना ।
हुत्वा शान्त्यम्बुना प्रोक्ष्य कुशैस्स्पृष्ट्वा जपेत्ततः ॥२०॥

दत्त्वा[1]ऽर्घ्यं च विलोमेन तत्त्वतत्त्वाधिपांस्ततः ।
मूर्तिमूर्तीश्वरान् लिङ्गपिण्डिकासंस्थितान् गुरुः ॥२१॥

विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा ।
रज्वा ब[2]द्ध्वा ततो नीत्वा शिवमस्तु गृणन् जनैः ॥२२॥

तज्जले निक्षिपेन्मन्त्री पुष्ट्यर्थं जुहुयाच्छतम् ।
तृप्तये दिग्पतीनां च वास्तुशुद्ध्यै शतं शतम् ॥ २३ ॥

---

१. दत्त्वेति "सद्योजातादिवक्त्रेषु दद्यादर्घ्यं पराङ्मुखं" इति सिद्धान्तशेखरकृत् । २. बद्ध्वा लिङ्गं पीठं चेति शेषः ।

रक्षां विधाय तद्धाम्नि महापाशुपतास्त्रतः ।
लिङ्गं तन्मानतस्तत्र विधिवत्स्थापयेद्गुरुः ॥ २४ ॥

असुरैर्मुनिभिर्देवैस्तत्त्वविद्भिः प्रतिष्ठितम् ।
जीर्णं वाप्यथवा भग्नं विधिनाऽपि न चालयेत् ॥२५॥

एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ ।
खड्गे मन्त्रगणं न्यस्य कारयेन्मन्दिरान्तरम् ॥ २६ ॥

सङ्कोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः ।
तद्द्रव्यं श्रेष्ठद्रव्यं वा तत्कार्यं तत्प्रमाणकम् ॥२७-१८०५॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ काम्यविधौ
जीर्णोद्धारविधिस्समाप्तः ।

---

# अथ मठप्रतिष्ठाविधिः ।

प्रतिष्ठाऽथ मठादीनां प्रवेशश्चाभिधीयते ।
मण्टपादि विधायाऽथ शिवकुम्भं च तद्गतम् ॥ १ ॥

विलिप्य गोमयेनैनं सबाह्याभ्यन्तरं मठम् ।
पुष्पस्रक्वस्त्रशोभाढ्यं कृत्वा तोरणभूषितम् ॥ २ ॥

सबन्धुर्यजमानस्तु देशिकादिपुरस्सरः ।
वस्त्रयुग्मावृतं स्कन्धे शिवकुम्भं द्विजन्मनः ॥ ३ ॥

वेदवाद्यरवैर्दिव्यैर्मठं कृत्वा प्रदक्षिणम् ।
किञ्चिद्विलम्ब्य तस्याग्रे देशिकं तपसान्वितम् ॥ ४ ॥
मठं प्रवेशयेत्कर्ता सुलग्ने कृतमङ्गळः ।
चतुष्के विन्यसेत्कुम्भं धान्यस्थमुदगाननम् ॥ ५ ॥
दक्षिणां च ततो दद्याद्विप्रदैवज्ञशिल्पिनाम् ।
पूर्वतः पूजयेत्कुम्भान् वास्तुं द्विकरमण्डले ॥ ६ ॥
जगत्यां पादपीठे च जङ्घायां च कपोतके ।
छदने च यथासंख्यं निवृत्यादिकला न्यसेत् ॥ ७ ॥
ततश्शक्तिं समभ्यर्च्य हृदैव द्वारपालकान् ।
वेद्यां वाह्य स्वसंज्ञाभिः पूजयेद्ध्यानपूर्वकम् ॥ ८ ॥
अग्न्यगारमथाऽऽसाद्य तर्पयेद्वास्तुदेवताः ।
निवृत्यादिकलाश्चाऽपि द्वारपालान् स्वशम्बरैः ॥ ९ ॥
दत्वा दिग्बलिमाचम्य सकळीकृतविग्रहः ।
बीजपूराम्रमालूरैर्नारङ्गैश्च कपित्थकैः ॥ १० ॥
बदर्यामलकवार्ताकैर्दाडिमैस्सकपर्दकैः ।
स्नापयेच्च घटाम्भोभिरुपरिष्टान्मठालयम् ॥ ११ ॥
विभूतिस्थितिहेत्वर्थं सन्तानादिविवृद्धये ।
तदर्थं कीर्तयेन्नाम कर्तृनामाङ्कितं मठम् ॥ १२ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ काम्यविधौ
मठप्रतिष्ठाविधिस्समाप्तः ।

---

१. व्याप्त्या वाह्य इत्यपि पाठः ।

# अथ पुष्करिणीप्रतिष्ठा ।

कोष्ठेषु वास्तुदेवतास्थापनक्रमः ।

प्रतिष्ठा च यथाशास्त्रं पुष्करिण्या निगद्यते ।
तत्रादौ पूजयेद्वास्तु वेदाश्रे रुद्रभाजिते ॥ १ ॥

कोणेषु त्रिपदाः पूज्या ईशाग्निपितृवायवः ।
एकैकपदमारूढाः पर्जन्याद्या यथा(यथं) क्रमम् ॥ २ ॥

आपाद्या[1]: करकोष्ठस्था मरीच्याद्या दशाङ्गुगाः[2] ।
ब्रह्मा मध्यप्रदेशे तु पञ्चविंशतिकोष्ठके ॥ ३ ॥

यजेद्वास्तु प्रतिष्ठायां वारुण्यां मण्टपे शुभे ।
परिगृहीतभूमध्ये प्रारम्भेऽपि यथाविधि ॥ ४ ॥

अष्टदळेषु पूजाक्रमः ।

ततो मूर्त्यङ्कसंयुक्तं निजनाम्ना ध्रुवादिना ।
अष्टपत्रे सिताम्भोजे कालाग्निं मध्यतो यजेत् ॥ ५ ॥

हाटकेशं बलेशाख्यं बलनाथं महोदरम् ।
महाब्धिं कलशाम्भोधिं विरूपाक्षं च पूजयेत् ॥ ६ ॥

---

१. आपाद्या इति ''तदष्टौ द्विपदा यथा । सविता चाथ सावित्र इन्द्रश्चेन्द्रजयस्तथा । रुद्रश्च रुद्रदासश्च शिवश्चैवापवत्सकः इति सिद्धान्तशेखरकृत् । २. दशेति ''मरीचिश्च विवस्वांश्च भृशश्च पृथिवीधरः । चत्वारस्ते दशपदा'' इति सिद्धान्तशेखरकृत् ।

पूर्वपत्रक्रमादीशो भ्रुकुटीश्वरमष्टमम् ।
अनन्तादींस्ततो गर्ते कार्कोटान्तान्निजाणुभिः ॥ ७ ॥
यज्ञमण्टपबाह्ये[1] तु पूजयेच्च पराङ्मुखान् ।

पुष्करिण्यां निक्षेपणीयद्रव्याणि ।

ग्रहान्[2] लोकाधिनाथांश्च रौप्यं नागाष्टकं तथा ॥ ८ ॥
तत्राऽनन्तं महापद्मं तक्षकं गुळिकाह्वयम् ।
शङ्खं च वासुकिं पद्मं कार्कोटं चाष्टमं न्यसेत् ॥ ९ ॥
पूजां पूर्वादितः कृत्वा न्यसेत्तस्यां षडोषधीः ।
फलिन्युशीरसर्पाक्षिमहा[3]यष्ट्यङ्क्रिका इति ॥ १० ॥
कमठं पञ्चरत्नानि रसं गङ्गाम्बुपङ्कजम् ।
अर्घ्याम्बु पञ्चगव्यं च पुष्करिण्यां परिक्षिपेत् ॥ ११ ॥

अहियष्टिकास्थापनम् ।

खाततो द्विगुणां पादहीनामर्धेन वाऽधिकाम् ।
दृढां लोचनसंयुक्तां सालसुन्दरिकादिजाम् ॥ १२ ॥

---

१. यज्ञेति "ततस्तन्मण्डपाद्बाह्ये चरक्यादींश्च पूजयेत् । चरकी च विदारी च पूतना पापराक्षसी । स्कन्दोऽर्यमा च जम्भश्च पिलिपिंच्छो यथाक्रमम्" इति सिद्धान्तशेखरकृत् । २. ग्रहानिति "नानाजलचरान् कृत्वा हेमरौप्यादिनिर्मितान् । एतान् सम्पूज्य गन्धाद्यैः पुष्करिण्यां च निक्षिपेत्" इति सिद्धान्तशेखरकृत् । ३. महेति "सहां यष्ट्यङ्घ्रि-कांश्चे"ति सिद्धान्तशेखरकृत् ।

स्नापयित्वा समभ्यर्च्य ध्वजवत्तूर्यनिस्स्वनैः ।
अनन्तमनुना मध्ये निक्षिपेदहियष्टिकाम् ॥ १३ ॥

ओं सहस्रभोगचूडाय विश्वाधारस्थिताय च ।
ओं हूं ह्रूं फट् अनन्तनागाधिपतये नमः ॥ १४ ॥

अभ्युक्ष्यास्त्राम्बुना पाशुपतास्त्रेणाऽधिवासयेत् ।
क्षुरिकया[1]ऽवतार्याथ क्षिपेद्धामेन[2] वारिणि ॥ १५ ॥

तदनन्तरकरणीयविधिः ।

रौप्यपाशं समादाय कपिलापृष्ठसङ्गतम् ।
यजमानस्तरेत्तस्यां गुरुः पाशुपतं जपेत् ॥ १६ ॥

तत्र सन्तारणादेव तीर्णा वैतरणी नदी ।
शतं साष्टमघोरेण हुत्वा[3] सन्तर्प्य वारुणम् ॥ १७ ॥

देवं वा वामदेवाख्यं चरुं तेनैव साधयेत् ।
चरुणा शिवमन्त्रेण दद्यात्पूर्णाहुतिं गुरुः ॥ १८ ॥

गौरियं गुरवे देया वस्त्रभूषणानि च ।
अमुमेव विधिं कुर्याद्गुरुर्वापीतटाकयोः ॥ १९-१८३६ ॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ काम्यविधौ
पुष्करिणीप्रतिष्ठाविधिस्समाप्तः ।

---

१. क्षुरिकया क्षुरिकास्त्रमन्त्रतः । २. वामेन वामदेवेन । ३. हुत्वेति तिलैरिति सिद्धान्तशेखरकृत् ।

इति नानाग्रन्थसङ्गृहीता टीकेयं समाप्ता ।

# अथ कूपप्रतिष्ठा ।

अथ कूपप्रतिष्ठाऽपि संक्षेपादुपदिश्यते ।
अत्राऽपि पूजयेद्वास्तु बिम्बे भास्करभाजिते ॥ १ ॥
ईशखाग्निमृगाश्चैव पित(रौ गौ)मरुत्त्रिति ।
ईशादीशान्तकोणेषु सार्ध.द्विपदनायकान् ॥ २ ॥
पर्जन्याद्यास्तु पादस्था आपाद्याः पदयुग्मकाः ।
भानुभागा मरीच्याद्या ब्रह्मा षट्त्रिंशदंशकः ॥ ३ ॥
चरक्याद्या बहिः पूज्यास्स्कन्दाद्या अपि पूर्ववत् ।
स्वतन्त्रविहितैर्मन्त्रैर्हृदा वा तदनन्तरम् ॥ ४ ॥
यजेत्कालाग्निमम्भोजे रूपाद्वारुणमण्डले ।
पूर्वोदितविधानेन रौप्यनागाष्टकावृतम् ॥ ५ ॥
हुत्वाऽथैभ्यो बलिं दत्वा कूपे रत्नादि निक्षिपेत् ।
प्रोक्षेच्छान्त्यम्बुना शान्त्यै यजमानं ततो गुरुः ॥ ६ ॥
गुरुं सन्तोषयेत्कर्ता गोहिरण्याम्बरादिभिः ।
भोजनादि ततो दद्याद्यथासामर्थ्यमर्थिनाम् ॥ ७ ॥
कूपवत्सर्वखातानां विधिः कार्यो विजानता ।
क्षेपणं हवनं यच्च सव्यासव्येन सम्मतम् ॥ ८-१८४४॥

क्रियाकाण्डक्रमावळ्याख्यसोमशम्भुपद्धतौ काम्यविधौ
कूपप्रतिष्ठाविधिस्समाप्तः ।

# अथ वृक्षप्रतिष्ठा ।

अथ वृक्षप्रतिष्ठायां हवनं सघृतैस्तिलैः ।
आरामोद्यानमावृक्षात्पूर्वे च दिशि मण्डपे ॥ १ ॥
स्नपनं पूर्ववन्न्यासं स्वेन स्वेनाणुना चरेत् ।
वृक्षादिदेवताप्रीत्यै दद्यात्पूर्णाहुतिं गुरुः ॥ २ ॥
कर्ता सम्पूजयेत्पश्चादाचार्यं ब्राह्मणानपि ।
बन्धून् मित्राणि दीनांश्च भोजयेत्तोषयेदपि ॥ ३ ॥

ग्रन्थोपरमः ।

श्रीशाननामा शिवतुल्यधामा
तस्याथ शिष्यो विमलेशनामा ।
तस्याऽपि शिष्योऽस्त्रशिवश्शिवात्मा
शिष्योऽभवद्यस्य स सोमशम्भुः ॥ ४ ॥
यो गोळकस्थानकृताधिपत्यो
दिक्चक्रवाळोदरगीतकीर्तिः ।
शिवागमज्ञो मुनिबृन्दवन्द्य-
श्चक्रे क्रियाकाण्डपद(क्रिया)क्रमाळिम् ॥ ५ ॥
क तावकीनाऽऽगमबोधविक्लबा
वयं क शैवागमसारपद्धतिः ।

त्ययदंध्म नैनां खलु सर्वकारण
त्वदिच्छयैवेति शिव क्षमस्व नः ॥ ६ ॥

श्रीविक्रमाख्यनृपकालसमुद्भवेषु
पञ्चाशता त्रिसहितेषु शरच्छतेषु ।
एकादशस्वमलशास्त्रमिदं समाप्तं
गूढस्य देशिकमतस्य सहस्रयुग्मम् ॥ ७ ॥

तावत्ते गुरवो ज्ञेया यावदाचारपालकाः ।
आचारात्तु परिभ्रष्टास्त्याज्यास्ते भग्नलिङ्गवत् ॥
॥ ८–१८५१ ॥

इति श्रीसोमशम्भुशिवाचार्यविरचिता
क्रियाकाण्डक्रमावलिस्समाप्ता ।



॥ श्रीः ॥

# सोमशम्भुपद्धतेरकारादिक्रमसूचिका ।

5

अकारादिक्रमसूचिका समाप्ता ।

॥ श्रीः ॥

# सोमशम्भुपद्धतेः ।

## शुद्धाऽशुद्धनिवेदिनी ।

| अशुद्धः. | शुद्धः. | पुटः. | पङ्क्तिः. |
|---|---|---|---|
| वूते | ब्रूते | १६ | २० |
| थथा | यथा | १८ | ६ |
| स्थाप | स्थापि | २० | १४ |
| णां च | णा च | २१ | ११ |
| अनेनऽऽदि | अनेनाऽऽदि | २३ | ९ |
| शस्त्री | शास्त्री | २५ | १८ |
| स्थाप | स्थापि | ३६ | ७ |
| णाभ्यु | णाऽभ्यु | ४२ | १४ |
| वज्रीं | वज्री | ४३ | ८ |
| दात्म | दाऽऽत्म | ४४ | १३ |
| हृदार्चं | हृदाऽर्चं | ४५ | १६ |
| हृदार्चं | हृदाऽर्चं | ४६ | ७ |
| हृदार्चं | हृदाऽर्चं | ४६ | १० |
| साणुना | साऽणुना | ४७ | ८ |
| दात्म | दाऽऽत्म | ४८ | २ |
| दाल | दाऽऽल | ४८ | ३ |
| दाज्य | दाऽऽज्य | ४९ | २ |
| हृदाणु | हृदाऽणु | ५२ | ११ |
| स्वस्स्वाहा | सुवस्स्वाहा | ९५ | २१ |
| शोप्य | चोष्य | ९७ | १३ |
| स्तृग्वि | स्रग्वि | ९७ | १३ |

| अशुद्धः. | शुद्धः. | पृष्ठः. | पङ्क्तिः. |
|---|---|---|---|
| मे | ते | ९७ | १६ |
| स्नगा | स्रगा | ५९ | १० |
| क्यपि । ज्ञा | क्यपि ज्ञा | ५९ | २० |
| श्रूया | श्रया | ६१ | २१ |
| क्त्वाल्प | क्त्वाऽल्प | ६३ | १६ |
| पाङ्कु | पादाङ्कु | ६४ | १५ |
| वृजे | व्रजे | ६६ | ९ |
| वृज | व्रज | ६६ | १० |
| वृजे | व्रजे | ६६ | १५ |
| वृती | व्रती | ६७ | ५ |
| सूरो | शूरो | ६९ | १९ |
| सूरो | शूरो | ७० | ६ |
| ने | नै | ७५ | १२ |
| फडस्नाय | फट्पाशुपतास्नाय | ७६ | १५ |
| वृ | व्र | ७८ | १२ |
| वृ | व्र | ७९ | १९ |
| वृ | व्र | ८१ | २१ |
| वृ | व्र | ८४ | १६ |
| वृ | व्र | ८६ | १५ |
| वृ | व्र | ८८ | १२ |
| लु | लि | ९१ | ९ |
| वृ | व्र | ९४ | ७ |
| वृ | व्र | ९४ | १५ |
| दान्वि | दाऽन्वि | ९४ | १६ |
| वृ | व्र | १०२ | १२ |
| वृ | व्र | १०२ | १९ |
| वृ | व्र | १०६ | १७ |

| अशुद्धः | शुद्धः. | पुटः. | पङ्क्तिः. |
|---|---|---|---|
| वृ | व्र | १०७ | २ |
| वृ | व्र | १०७ | १९ |
| वृ | व्र | १०७ | १९ |
| रत्नोदकं च पञ्चामृतं च पात्राणि | रत्नोदकं चेति पञ्च तत्तत्पात्राणि | १११ | ५ |
| हृदाभ्य | हृदाऽभ्य | ११८ | १० |
| हृदाभ्य | हृदाऽभ्य | ११८ | २१ |
| ह्रीं पशूं | श्रीं पशूं | ११९ | ९ |
| वं | पं | ११९ | ११ |
| हूं | हुं | ११९ | १२ |
| हृदाहु | हृदाऽऽहु | १२१ | ११ |
| विरेफावान्तिमौ शौ रेफषष्ठस्वरान्वितौ | विरेफयादिहान्तानि ह्रूरेफघटितानि च | १२२ | २१ |
| ओं यूं ओं लूं ओं वूं ओं शूं ओं षूं ओं सूं ओं हूं | ओं यूं ओं लूं ओं व्रूं ओं श्रूं ओं षूं ओं स्रूं ओं ह्रूं | १२२ | २२ |
| इन्दुबिन्दुशिखायुक्तौ | भूषितानीन्दुबिन्दुभ्यां | १२३ | २ |
| दूर्वाधि | दूर्वाऽऽधि | १२३ | १४ |
| चुल्यां | चुल्ल्यां | १२६ | २ |
| यार्चि | याऽर्चि | १२९ | १९ |
| शिवं | शिव | १३० | १८ |
| हृदार्चे | हृदाऽर्चे | १३७ | ८ |
| नाहु | नाऽऽहु | १३७ | ९ |
| दार्च | दाऽर्च | १३७ | १९ |
| (कख) | कख | १३८ | १४ |
| कलाये | कलापाशाय | १३९ | १४ |

| अशुद्धः. | शुद्धः. | पुटः. | पङ्क्तिः. |
|---|---|---|---|
| नार्चे | नाऽर्चे | १४० | ७ |
| कलायै न | कलापाशाय न | १४० | ९ |
| कलायै न | कलापाशाय न | १४१ | ६ |
| अपानप्राणौ | प्राणाऽपानौ | १४१ | १८ |
| कलायै न | कलापाशाय न | १४२ | २ |
| प्राणा | प्रणा | १४३ | १७ |
| मक्त्यै | मुक्त्यै | १४४ | ९ |
| (मुत्तरास्य) | मुक्ताऽन्यस्या | १४४ | १५ |
| च्चरौः | च्चरोः | १४९ | ३ |
| तिलादिना रेखा | तिलादिना त्रीन् रेखा | १४५ | १८ |
| हां | ह्लां | १४८ | २ |
| धन्यो सौ | धन्यस्सौ | १४९ | ६ |
| करो | हरो | १४९ | १० |
| दाच | दाऽऽच | १५३ | ३ |
| शिवो | विशो | १५३ | १९ |
| पूर्णा | पूर्णां | १५५ | ९ |
| काष्षड् | कैष्षड् | १५५ | १८ |
| नादिक | नाऽऽदिक | १५६ | ७ |
| तेजा: | तेजः | १५७ | ९ |
| याङ्कुश | याऽङ्कुश | १५८ | १९ |
| च्छिन्द्या | छिन्द्या | १५९ | १४ |
| प्रतिष्ठास्य | प्रतिष्ठाऽस्य | १६० | १७ |
| वर्णाष्व | वर्णाष्ष | १६१ | ४ |
| तिरो | निरो | १६३ | ४ |
| च्छेद | छेद | १६३ | ५ |

| अशुद्धः. | शुद्धः. | पुटः. | पङ्क्तिः. |
|---|---|---|---|
| नाह | नह | १६४ | ११ |
| तायां शा | तायाश्शा | १६६ | १७ |
| याङ्कुश | याऽङ्कुश | १६८ | १२ |
| हृदाकृष्य | हृदाऽऽकृष्य | १६८ | १४ |
| त्वार्चां | त्वाऽर्चां | १७६ | २ |
| नात्रा | नाऽत्रा | १७६ | १३ |
| ह्रूव | ह्रू | १७७ | ४ |
| कृत्वात्म | कृत्वाऽऽत्म | १८० | ५. |
| ता च | ताऽऽच | १८० | ७ |
| शिखा | शिखां | १८१ | २ |
| यान्वि | याऽन्वि | १८४ | २० |
| त्वाद्य | त्वाऽद्य | १८५ | ९ |
| ततश्शिष्यः | सशिष्योऽयं | १८५ | १२ |
| त्वाणि | त्वाऽणि | १८८ | २ |
| त्वास्मिन् | त्वाऽस्मिन् | १९० | २ |
| कुर्य | कुर्या | १९२ | १३ |
| र्गादि अ | र्गादीन | १९३ | ९ |
| त्वास्त्र | त्वाऽस्त्र | १९५ | ९ |
| अथात्र | अथाऽत्र | १९७ | १७ |
| प्रति मा | प्रतिमा | २०० | १२ |
| द्यो न | द्या न | २१६ | १८ |
| पि | ब | २२० | २ |
| याग | याऽऽग | २२० | ३ |
| स्स्तू | स्स्थू | २२६ | ४ |
| पाठ | पाठः | २२७ | २२ |
| पिण्डं | पट्टीं | २२९ | १३ |

| अशुद्धः. | शुद्धः. | पुटः. | पङ्क्तिः. |
| --- | --- | --- | --- |
| वस्त्रस्र | वस्त्रास्त्र | २३२ | ९ |
| लैश्चाहुः प्र | लैर्वाहुप्र | २३२ | १७ |
| पर्वकं | पर्वकाः | २३३ | ८ |
| दीर्घा | दीर्घां | २३३ | १२ |
| त्रिंशे | त्र्यंशे | २३३ | १८ |
| ङ्गुल | ङ्गुलि | २३४ | २ |
| गाण्डिकं कण | कण्ठे कङ्कण | २३४ | ६ |
| मण्टपं | मण्डलं | २३५ | १० |
| शिशिरौ घटौ | शिशिरावुभौ | २३६ | १० |
| काङ्क्ष्ति | काङ्क्षि | २३७ | १० |
| हुं फट् वज्राय | वज्राय | २३७ | २ |
| स्रग्व | स्रग्व | २३९ | ४ |
| हृष्ट | हृष्ट | २४५ | ६ |
| गुडलवणधान्याक्ष | गुडलावणधान्यादि | २४७ | १२ |
| त्वश | त्वच्छ | २५५ | १२ |
| भवेत् | भव | २६१ | १४ |
| च प्र | न प्र | २६२ | १८ |
| क या | कं या | २६७ | ३ |
| शय्या | शय्या | २७१ | ४ |
| श्शङ्खं | श्शाङ्खं | २७६ | ११ |
| यकेः | यकैः | २७९ | १० |
| संयुतम् | संस्कृतम् | २८२ | ६ |

---

शुद्धाऽशुद्धनिवेदिनी

समाप्ता ।

---

॥ श्रीः ॥

# प्रकटनपत्रिका ।

---

## देवकोट्टै शिवागमसिद्धान्तपरिपालनसङ्घात्

## सम्मुद्रय प्रकाशितानां पुस्तकानां सूचिका ।

—:o:—

| | | | |
|---|---|---|---|
| १. | श्रीशिवार्चनाचन्द्रिका——(देवनागरीलिप्यां) श्रीमदप्पय्यदीक्षितकृता । आत्मार्थपूजां प्रकाशयित्री | रू. | १—०—० |
| २. | शिवार्चनाचन्द्रिका——सैव द्राविडभाषया विपरिणता | रू. | १—८—० |
| ३. | अष्टप्रकरणम् । (देवनागरीलिप्याम्) (तत्त्वप्रकाशिकातत्त्वसङ्ग्रहतत्त्वत्रयनिर्णय - रत्नत्रयभोगकारिकानादकारिकामोक्षकारिका- परमोक्षनिरासकारिकाख्यग्रन्थाष्टकसंयुतं, सव्याख्यमेकं पुस्तकं) | रू. | २—८—० |
| ४. | अष्टप्रकरणं——तदेव द्राविडभाषया विपरिणतम् | रू. | ३—०—० |
| ५. | मतङ्गपारमेश्वरागमः——(विद्यापादमात्रयुतः देवनागरीलिप्याम्) | रू. | १—०—० |
| ६. | शम्भुपूजाविधिः——(ग्रन्थलिप्याम्) | रू. | ०—६—० |
| ७. | शैवभूषणं——ग्रन्थमूलयुतं, द्राविडव्याख्या- मिळितम् | रू. | १—०—० |

८. शैवसिद्धान्तपरिभाषा—नागरलिप्याम् रू. ०—८—०

९. शैवसिद्धान्तपरिभाषा—सैव द्राविडभाषया विपरिणता रू. ०—८—०

१०. श्रीमृगेन्द्रागमः—(देवनागरीलिप्याम्) विद्यायोगपादद्वयमिळितः। भट्टनारायणकण्ठकृतवृत्त्या तद्व्याख्यया अघोरशिवाचार्यकृतदीपिकया च संयुतः। पूर्णकलिकोवैण्ट् रू ५—०—०

११. शिवालयनित्यपूजाविध्याख्यपरार्थनित्यपूजाविधिः—(ग्रन्थलिप्याम्). रू. १—०—०

१२. शिवालयनित्यपूजाविध्याख्यपरार्थनित्यपूजाविधिः—स एव द्राविडभाषया विपरिणतः। रू. १—०—०

१३. क्रियाकाण्डक्रमावळ्याख्या सोमशम्भुपद्धतिः—(देवनागरीलिप्याम्) रू. २—८—०

एषैका विज्ञापना। पुस्तकेप्सवः ग्रन्थद्राविडदेवनागरीभेदप्रतिपादिकां पुस्तकप्रेषणार्थसन्देशपत्रिकां विलिखेयुः।

पेरियकाञ्चीपुरं पुण्यकोटि शिवश्रीसोमसुन्दरशिवाचार्येषु तथा मायवरं अय्यारप्पर् सन्निधि शिवश्री वैद्यनाथशिवाचार्येष्वपि एतानि पुस्तकानि लभ्येरन्।

इत्थं
कार्यदर्शी
शिवागमसङ्घः, देवकोट्टै.

